अध्वर्युः- दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा आश्रव्य, प्रत्याश्राविते । **अग्निं यज,** इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये ३ यजामहेऽग्निं जुषाणो अग्निराज्यस्य वेत् ३ वौ ३ षट्,** इति वषट्कुर्यात्

अध्वर्युः- होत्रा **वौषडित्युक्ते** ज्योतिष्मदग्नेरुत्तराघारपूर्वार्धेऽग्नये जुहुयात् ।

यजमानः- **अग्नय इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- प्रत्याक्रम्य जुहूपभृतावनासाद्य पूर्ववत् सकृदवदायाज्यस्य **सोमायानुब्रू३हि,** इति द्वितीयस्याज्यभागस्य पुरोनुवाक्यायै होतारं संप्रेष्येत् । पुनः पूर्ववत् त्रिराज्यस्याव[91]दाय

होता- **सोम[92] गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृळीको न आविशो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- दक्षिणातिक्रम्योदङ्मुखः स्थित्वा आश्राव्य, प्रत्याश्राविते । **सोमं यज,** इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये ३ यजामहे सोमं जुषाणः सोम आज्यस्य हविषो वेतू३ वौ३ षट्,** इति वषट्कारं बूयात् ।

अध्वर्युः- होत्रा **वौषडित्युक्ते** ज्वलदग्नेर्दाक्षिणार्धपूर्वार्धे पूर्वाज्यभागेन समं सोमाय जुहुयात् ।

यजमानः- **सोमायेदं न मम,** इति त्यागं कृत्वा **अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासम्।** इति हुत्वा **ज्यभागावनुमन्त्रयेत ।**

अध्वर्युः- प्रत्याकम्य स्वासन उपविश्याऽऽज्यभागार्थं गृहीते जुहूपभृतौ स्वायतने स्विष्टकृद्यागसमाप्तिपर्यन्तं न निदध्यात् । हस्त एव धारयेदित्यर्थः ।

यजमानः- **व्रत्येऽहनि व्रतलोपप्रायश्चित्तार्थं व्रातपतीष्टिस्थाने पूर्णाहुतिं होष्यामि ।** आपस्तम्बयजमानः पूर्णाहुतिमित्यत्र स्रुवाहुतिमिति वदेत् ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं जुह्वां चतुर्वारं स्रुवेण गृहीत्वा, **अग्नये व्रतपतये स्वाहा,** इति जुहुयात् ।

---

91) प्रत्यवदानानन्तरं - आप्यायतामिति मन्त्रेण ध्रौवमाप्यायनं कार्यम् ।

92) पौर्णमास्याम् । सोम गीर्मिष्ट्वेत्यस्याः पुरोनुवाक्यायाः स्थाने होता **त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

**यजमानः-** **अग्नये व्रतपतय इदं न मम**, इति त्यागं कृत्वा संभावितसमस्तदोषनिर्हरणार्थं सर्वप्रायश्चित्तं करिष्ये ।

**अध्वर्युः-** आज्यस्थाल्या आज्यं स्रुवेण तूष्णीं जुह्वां सकृद्गृहीत्वा **भूर्भुवः सुवः स्वाहा** । इति जुहुयात् ।

**यजमान-** **प्रजापतय इदं न मम**, इति त्यागं कृत्वा **अग्निर्होता । अश्विनावध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता** । इति पुरस्ताद्धविरवदानस्य पञ्चहोतारं वदेत् ।

**अथ पूर्णमास्यां प्रधान यागः ।**

**अध्वर्युः-** अवदानधर्मेण सकृदाज्यं समादाय जुह्वामुपस्तीर्य **अग्नयेनुब्रू3हि**, इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

**होता-** **अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

**अध्वर्युः-** **मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत् । भरतमुद्धरेम-मनुषिञ्चावदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हि ꣳ सीः ।** इत्याग्नेयस्य पुरोडा शस्य मध्यादङ्गुष्ठपर्वमात्रमवदानं दक्षिणाग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय पूर्वार्धाद्द्वितीयमवदानं प्रागग्रैर्मध्यमानामिकाङ्गुष्ठैरवदाय जुह्वामवधाय हस्तं प्रक्षाल्य (पञ्चावत्तिनः पश्चाद्भागात्तृतीयमवदाय जुह्वामवदध्यादिति विशेषः) समन्त्रकं पूर्ववदवत्तमभिघार्य **यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येनतत्त आप्यायतां पुनः** । इति स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा। आश्रव्य, प्रत्याश्राविते । **अग्निं यज**, इति याज्यायै होतारं संप्रेष्येत् ।

**होता-** **ये३ यजामहेऽग्निं भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षा जिह्वामग्ने च कृषे हव्यवाहाँ३ वौ3षट्** । इति वषट्कुर्यात् ।

**अध्वर्युः-** होत्रा **वौषडित्युक्ते** स्त्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन्नाघारसंभेददेशे हुत्वाऽऽज्यशेषमन्ववस्रावयेत् । (एवं

क्रमश्चरुपुरोडाशादितन्त्रे, न द्रवद्द्रव्यतन्त्रे । यदा वीतार्चिर्लेलायतीवाग्निरथाऽऽहुतीर्जुहुयात्)।

यजमानः- **अग्नय इदं न मम,** इति त्यागं कृत्वा **अग्नेरहं देवयज्ययाऽन्नादो भूयासम् ।** इत्याग्नेयं पुरोडाशं हुतमनुमन्त्रयेत ।

अध्वर्युः- (उपांशु) **विष्णवे** (उच्चैः) **अनुब्रू३हि,** इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता- (उपांशु) **इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूहळमस्य पांसुरे ।** (उच्चैः) ॐ ३ मिति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- पूर्ववत् त्रिवारं समन्त्रकं ध्रुवातः अवदायाप्याय ध्रुवां दक्षिणाऽतिक्रम्योदङमुखः स्थित्वा आश्रव्य, प्रत्याश्राविते । (उपांशु) **विष्णुं** (उच्चैः) **यज,** इति याज्यायै होतारं संप्रेष्येत्।

होता- (उच्चैः) **ये ३ यजामहे,** (उपांशु) **विष्णुम् त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा । प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नामा ३ वौ३षट्,** इति वषट्कुर्यात् (उच्चैः)

अध्वर्युः- होत्रा **वौपडित्युके** स्रुच्याघारस्योपरि जुह्वाग्रेण जुहुयात् ।

यजमानः- **विष्णव इदं न मम,** इति त्यागं कृत्वा **दब्धिरस्यदब्धो भूयासं पाप्मानं दभेयम् ।** इत्युपांशुयाजं हुतमनुमन्त्रयेत ।

अध्वर्युः- प्रत्याक्रम्य स्वासन उपविश्य तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय अग्नीपोमीयार्थं जुहूमुपस्तीर्य अग्नीपोमीयस्य पुरोडाशत् मध्यात् पूर्वार्धाच्चेति माभेर्मा इति मन्त्रेण द्विरवदाय **अग्नीषोमाभ्यामनुब्रू३हि** इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता- **अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- अवत्तमभिघार्य **यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येनत्तत्त आप्यायतां पुनः ।।** इति स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा आश्राव्य, प्रत्याश्राविते । **अग्नीषोमौ यज,** इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये३ यजामहेऽग्नीषोमौ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीता३न्वौ३ षट्,** इति वषट्कुर्यात्

अध्वर्युः- होत्रा **वौषडित्युक्ते** स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं पुरोडाशमहिंसन्स्रुच्याघारोपरि उपांशुयाजहोमसंनिहितं हुत्वाऽऽज्य-शेषमन्ववस्रावयेत् ।

यजमानः- **अग्नीषोमाभ्यामिदं न मम,** इति त्यागं कृत्वा **अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् ।** इत्यग्नीषोमीयं पुरोडाशं हुतमनुमन्त्रयेत ।

अध्वर्युः- प्रत्याक्रम्य स्वासन उपविश्य पूर्ववत् जुहूमुपस्तीर्य **इन्द्राय वैमृधायानुब्रू3हि,** इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता- **वि न इन्द्र मृघो जहि नीचा यच्छ पृतन्यतः । यो आस्माँ अभिदासत्यधरं गमया तमो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- **मा भेर्मा संविक्था** इति मन्त्रेण ऐन्द्रवैमृधस्य पुरोडाशस्य मध्यात् पूर्वार्धादचेतिद्विरवदाय अवत्तमभिघार्य **यदवदानानि** इति मन्त्रेण हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा आश्राव्य, प्रत्याश्राविते । **इन्द्रं वैमृधं यज,** इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये ३ यजामह इन्द्रं वैमृधं मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः । सृकं संशाय पविमिन्द्र निग्मं वि शत्रून्ताह्ळि वि मृधो नुदस्व ३ वौ३षट् ।।**

अध्वर्युः- होत्रा **वौषडित्युक्ते**-पूर्ववत्-अग्नीषोमीयहोमसन्निहितं जुहुयात्।

यजमानः- **इन्द्राय वैमृधायेदं न मम ।** इति त्यागं कृत्वा **इन्द्रग्य वैमृधस्याहं देवयज्ययाऽसपत्नो वीर्यवान् भूयासमिति** हुतमनुमन्त्रयेत । **अथामावास्यायां प्रधानयागः** आग्नेय उपांशुयागपर्यन्तं पूर्णमासवदेव कृत्वा (आपस्तम्ब यजमानस्य अमावास्यायां उपापांशु यागोऽपिनास्ति आग्नेय्य यागा नन्मरम्)

अध्वर्युः- प्रत्याक्रम्य स्वासन उपविष्य जूहूमुपस्तीर्य **महेन्द्रयानुब्रूहि,** इति होतारं प्रेष्येत् ।

होता- **महाँ इन्द्रोय ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वसस्य वावृधो३म् ।**

अध्वर्युः- **मा भेर्मा.... मामा हि॒ सीः ।** इति मन्त्रेण शृतस्य (प्रातर्दोहस्य) मध्यात् स्रुवेणादाय तेनैवमन्त्रेण पूर्वार्धाद्द्वितीयमवदाय (पञ्चावत्तिनः पश्चार्धात् तृतीयमवादाय) प्रातर्दोहवदेव तेनैव मन्त्रेण दध्नः मध्यान् पूर्वार्धात् द्विरवदाय अवत्तमभिघार्य हविप्रत्यभिघार्य (पञ्चावन्तिनः तृतीयमवदाय) दक्षिणातिक्रम्योदङ्मुखःतिष्ठन् आश्राव्य प्रत्याश्राविते **महेन्द्रं यज** इति होतारं संप्रेष्येत् ।

होता- **ये ३ यजामहे महेन्द्रं भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः। भुवो नॄँश्च्यौत्नौ विश्वस्मिन्भरे ज्योष्ठश्च मन्त्रो विश्वचर्षणा३इ वौ३षट् ।**

अध्वर्युः- होत्रा **वौषडित्युक्ते** स्रुच्याघारस्योपरि उपांशुयागसन्निहितं जुहुयात्

यजमानः- **महेन्द्रायेदं न मम,** इति त्यागं कृत्वा **महेन्द्रस्याहं देवयज्यया जेमनं महिमानं गमेयम्** । इति माहेन्द्रं सान्नायमनुमन्त्रयेत ।

अध्वर्युः- इन्द्रपक्षेऽपि महेन्द्रवदेव शृतस्य दध्नः चावदाय **इन्द्राया३नुब्रू३हि** इति होतारं प्रेष्येत

होता- **ऐन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतयेभरो३म्**

अध्वर्युः- दक्षिणातिक्रम्योदङ्मुखस्तिष्ठन् आश्राव्य प्रत्याश्राविते **इन्द्रं यज** इति सम्प्रेष्येत् ।

होता- **ये३ यजामह इन्द्रं प्रससाहिषे पुरूहूत शत्रून्ज्येष्ठस्ते शुष्म इहराति रस्तु । इन्द्राभर दक्षिणेना वसूनि प्रति सिन्धूनामसि रेवतीनां ३ वौ३ षट् ।**

अध्वर्युः- महेन्द्रवदेव जुहुयात् ।

यजमानः- महेन्द्रवदेव त्यागानुमन्त्रणौ कुर्यात् ।

असन्नयतस्तु- ऐन्द्राग्न एव सर्वेषां भवति

अध्वर्युः- मा भेंमा इति मन्त्रेण ऐन्द्राग्नपुरोडाषस्य मध्यात्पूवार्धाच्चेति पूर्ववद्द्विरवदायावत्तमभिघार्य हविः प्रत्यभिघार्य **इन्द्राग्निभ्या मनुब्रूहि३** इति होतारं सप्रेष्येत्

होता- **इन्द्राग्नी अवसागतमस्मभ्यं चर्षणीसहा । मानो दःशंसईषतो३म् ।**

अध्वर्युः- दक्षिणातिक्रभ्योदङ्मुखस्थित्वा आश्राव्य-प्रत्याश्राविते **इन्द्रीग्नी यज** इति संप्रेष्येत् ।

होता- **ये३यजामह इन्द्राग्नी गीर्भिविप्रः प्रमति मिच्छमान ईट्टे रयिं यशसंपूर्व भाजम्। इन्द्राग्नीवृत्रहणा सुवज्रा प्रनो नव्येभिस्तिरतं देष्णौ३ वौ३ षट् ।**

अध्वर्युः- अग्नीषोमीयवदेव जुहुयात् ।

यजमानः- **इन्द्राग्निभ्यामिदं न मम** इति त्यागं कृत्वा इन्द्राग्नयोरहं देवयज्ययेन्द्रियाव्यन्नादो **भूयासम्** इति हुतमनु मन्त्रयेत् । **अथपार्वणहोमः** ।

अध्वर्युः- प्रत्याक्रम्य स्वासन उपविश्य स्रुवेण आज्यमादाय **अमावास्या सुभगा सुशेवा धेनुरिव भूय अप्यायमाना । सा नो दोहताꣳसुवीर्यꣳ रायस्पोषꣳ सहास्रिणम् ।**

**अपानाय सुराधसेऽमावास्यायै स्वाहा,** इति जुहुयात् ।[93]

**यजमानः-** अमावास्याया इदं न मम, हति त्यागं कुर्यात् ।

**अध्वर्युः-** आज्यस्थाल्या आज्यं स्रुवेण जुह्वां षड्वारं सप्तवारं वा गृहीत्वा **दश ते तनुवो यज्ञं यज्ञियास्ताः प्रीणतु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत्स्वाहा ।** इति जुहुयात् ।

**यजमानः-** **नारिष्ठाभ्यामाग्निवायुभ्यामिदं न मम,** इति त्यागं कूर्यात् ।

**अध्वर्युः-** **यं वां देवा अकल्पयन्नूर्जो भागꣳ शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतम ꣳ हहौ स्वाहा ॥२॥** इति जुहुयात् ।

**यजमानः-** **नारिष्ठभ्यामाग्निवायुभ्यामिदं न मम,** इति त्यागं कुर्यात् ।

**अध्वर्युः-** **अहं देवानाꣳ सुकृतामस्मि लोके ममेदामिष्टं न मिथुर्भवाति । अहं नारिष्ठावनुयजामि विद्वान्यदाभ्यामिन्द्रो अदधाद्भागधेय ꣳ स्वाहा ॥३॥** इति जुहुयात् ।

**यजमानः-** **नारिष्ठाभ्यामग्नवायुभ्यमिदं न मम,** इति त्यागं कुर्यात् ।

**अध्वर्युः-** **अदारसृद्भवत देव सोमाऽस्मिन्यज्ञे मरुतो मृडता नः । मा नो विददभिभामो अशस्तिर्मा नो विददवृजना द्वेष्या या स्वाहा ॥४॥** इति जुहयात् ।

**यजमानः-** **नारिष्ठेभ्यः सोममरुद्भ्द्स्त्य इदं न मम,** (नारिष्टेभ्यो देव सोममरुद्भ्द् इति वा) ।

**अध्वर्युः-** **ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाꣳ हिविषा माज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताऽऽहुतिरेतु देवान्त्स्वाहा ॥ ५ ॥** इति जुहुयात् ।

**यजमानः-** **नारिष्ठाय ब्रह्मण हदं न मम,** इति त्यागं कुर्यात् ।

---

93) ऋषभं वाजिनं वयं पूर्णमासं यजामहे । स नो देहताः सुवीर्यः रायास्पोषः सहस्रिणम् । प्रणाय सुराधसे पूर्णमासाय स्वाहा इति पौर्णमास्यां जुहुयात् । यजमानः -- पूर्णमासायेदं न मम, इति त्यागं कुर्यात् । नादिष्ठा होमः अमावास्यावत् कुर्यात् । अथ स्विष्टकृत् ।

अध्वर्युः- **सं ते मानमा मनः सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छं न एधि द्विपदे शं चतुष्पदे स्वाहा** ||६|| इति जुहुयात् ।

यजमानाः- **नारिष्ठाय ब्रह्मण इदं मम** (नारिष्ठायाग्नय इदं न मम, इति वा ) इति त्यागं कुर्यात्। (ततो यदि सप्तवारमाज्यं गृहित्वा यागं चिकीर्षेत्तर्हि, अध्वर्युणा ग्राहयेत् ।)

अध्वर्युः- **सं ते मनसा मनः स प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत्स्वाहा** ||६|| इति जुहुयात् ।

यजमानः- **नारिष्ठायग्नय इदं न मम**, इति त्यागं कुर्तात् ।

अध्वर्युः- **सं प्राणे प्राणं दधामि ते सं व्याने समपानं दधामि ते । परिगृह्य यजमानोऽमृतोऽभूच्छं न्न एधि द्विपदे शं चतुष्पदे स्वाहा** । इति जुहुयात् ।

यजमानः- **नारिष्ठाय ब्रह्मण इदं न मम**, इति त्यागं कुर्यात् ।

अध्वर्युः- **अथस्विष्टकृत्** तूष्णीं ध्रुवास्थमाज्यं स्रुवेणाऽऽदाय जुह्वामानीयाऽऽ आज्यं स्रुवेणाऽऽदाय। ध्रौवमाप्याय्य **अग्नये स्विष्टकृतेऽनुब्रू३ हि**, इति पुरोनुवाक्यायै होतारं संप्रेषयेत्।

होता- **पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठो३म्** । इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- सर्वेषाᳪ हविषामुत्तरार्धात्सकृत्सकृत्स्विष्टकृते प्रधानावादानाद्भूयिष्ठमवदाय जुह्वामावधाय प्रतिहविरवदानं हस्तं प्रक्षाल्य (पञ्चावत्तिनो द्विरवदाय) अवत्तं द्विरभिघार्य न हविः प्रत्यभिघार्य दक्षिणाऽतिक्रम्योदङ्मुखस्तिष्ठन् आश्रव्य, प्रत्याश्राविते ।

अध्वर्युः- **अग्निᳪ स्विष्टकृतं यज** । इति याज्यायै होतारं संप्रेषयेत् ।

होता- [94]ये ३ **यजामहेऽग्निं स्विटकृतमायाळग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळग्नेः प्रिया धामान्ययाड्** (उपांशु) **विष्णोः** (उच्चैः) **प्रिया धामान्ययाण्महेन्द्रस्य प्रिया धामान्ययाड्देवानामाज्यपानां प्रिया धामानि**

---

94) पौर्णमास्याम् - **ये ३ यजामहेऽग्नि स्विष्टकृतमयाळक्निरग्नेः प्रिया धामान्ययाद् सोमस्य प्रिया धामान्य याळग्नेः प्रिया धामान्ययाड्** (उपाशु) **विष्णोः** (उच्चैः) **प्रिया धामान्ययाळग्नीषोमयोः प्रिया धामान्ययाळिन्द्रस्य वैमृधस्य प्रिया धामान्ययाड्देवानामाज्यपानामित्यादि समानम्** । असंनयतः, अमावास्यायां ये ३ **यजामहेग्नि स्विष्टकृनमयाळग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळग्नेः प्रिया धामान्ययाद्** (उपाशु) **विष्णोः** (उच्चैः) **प्रिया धामान्ययाळिन्द्राग्न्योः प्रिया** धामान्ययाड्देवानामित्यादि समानम् । आपस्तम्बीययजमानस्य संनयदमनयतोऽमावास्यायामुपशुयाजाभावा**द्विष्णोः प्रियेत्युपांशु** देवतानामकीर्तनं नास्ति ।

**यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्त्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जतवेदा जुषतां हविरग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा । ऋता यजासि महिना वियद्भूर्हव्या वह यविष्ट या ते अद्या३ वौ ३ षट्** इति वषट्कुर्यात् । (ये३ यजामहेऽग्निं स्विष्टकृतमिति याज्यां वौषडित्यन्तामनुच्छ्वसन्नेव पठेत् । उचछ्वसन्नेव पिपठिषेच्चेदर्धर्चे यज्वेत्यन्तं उच्छ्वसन्नेव पठेत् । नान्यत्रोच्छ्वासः कर्तव्यः)।

अध्वर्युः- होत्रा वौष**डित्युक्ते**-स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं हविः स्थगयन्निव स्रुक्पार्श्वेण तद्धविरहिंसन् अग्नेरुत्तरार्धपूर्वार्ध इतराहुतिभिरसꣳसक्तं हुत्वाऽऽज्यशेषमन्ववस्रावयेत्।

यजमानः- **अग्नये स्विकृत इदं न मम**, इति त्यागं कृत्वा **अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्टां गमेयम्** । इति सौविष्टकृतमनुमत्रयेत ।

अध्वर्युः- प्रत्याक्रम्य स्वासन उपविष्य जुह्वामपआनीय[95]**वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतम् । स नः पितरं पितामहं प्रतितामहꣳ स्वर्गे लोके पिन्वमानो विभर्तु स्वाहा** इत्यन्तःपरिधि निनीयाऽऽयतने जुहूपभृतौ सादयेत् ।

यजमानः- **अग्नये वैश्वानारायेदं न मम**, इति त्यागं कुर्यात् ।

अध्वर्युः- प्रशित्रपात्रमुपस्ततीर्याऽऽग्नेयं पुरोडाशं प्रञ्चं तिर्यञ्चं वा विरुज्या (भङ्त्वा) प उपस्पृश्याङ्गुष्ठेनोपमध्यमया चाङ्गुल्या व्यूह्य **अज्यायो यवमात्रादाव्याधात्कृत्यतामिदम्। मा रूरुपाम यज्ञस्य शुद्धꣳ स्विष्टमिदꣳ हविः ।।** इत्थाग्नेयस्य पुरोडाशस्य मध्याद्यवमात्रं पिप्पलमात्रं वा प्रशित्रमवादाय प्रशित्रपात्रे निदध्यात् । ततो हस्तं प्रक्षालयेत्।

---

95) वैश्वानरे हविरिदमित्यनेन यदपां निनयनं तत्प्राचीनावीतिना कार्यमिति केचिदस्मदीया वावदूकाः प्राहुः । तदसंगतम् - स नः पितरमितिमन्त्रस्य वैश्वानरप्रधानतोक्तेर्वैश्वानरे हविरिदमिति च निनयनरूपहोमाधिकरणत्वेन वैश्वनाराभिधानाच्च । यद्यधिकरणत्वेन होमाधिकरणं सिद्धं न देवता, इति चेत् स पिन्वमानः इत्येवास्तु । पितृलिङ्गमात्रेण यदि सैव देवता गृह्यते तर्हि जीवत्पितृकस्य निवर्तेत । न चेष्टापत्तिरितिवाच्यम्। लिङ्गतो दवता कदाह्निकल्पिता स्यात् । न च सर्वथा कर्मनिवृत्तिः । न च वा पितरि सत्यपि पितरं पिन्वमान इति भाविनीं वृत्तिमाश्रित्य वक्तुं बुद्धिमतामुचितम् । तस्माच्छुद्धं । निरपेक्षं प्रमाणयताऽऽहिताग्निना, अग्नये वैश्वारायेदं न ममेति त्यागो वक्तव्यः । अध्वर्युविदाऽध्वर्युणा निनयनमुपीतिनैवं कार्यम् ।

यजमानः- **अग्निर्मा दुरिष्टात्पातु सविताघशंऽ साद्यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषम्** । इति प्रशित्रमावदीयमानमनुमन्त्रयेत ।

अध्वर्युः- अवत्तं प्रशित्रं माज्येनाभिघार्य प्रशित्रमग्रेणाऽऽहवनीयं ब्रह्मणे परिहरेत् ।

आश्वलायनब्रह्मा- **मित्रस्य त्वा चक्षुषा प्रतीक्षे** । इति प्रशित्रमाह्रियमाणमीक्षित्वा **देवस्य त्वा सवितुः प्रसवेऽश्विऽनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृहामि** । इति तदञ्जलिना प्रतिगृह्य **पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे** इत्यन्तर्वेदि कुशेषु प्रग्दण्डं निधायाङ्गुष्टोपकनिष्ठिकाभ्यां गृहीत्वा **अग्नेष्टाऽऽस्येन प्रश्नामि बृहस्पतेर्मुखेन** । इति दन्तैरपीडयन्प्राश्याऽऽचम्य **सत्येन त्वाऽभिजिघर्मि या अप्स्वन्तर्देवतास्ता इदं शामयन्तु चक्षुः क्षेत्रं प्रणान्ये मा हिंसीः**, इत्यपः पीत्वाऽऽचम्य **इन्द्रस्य त्वा जठरे** दधामि इति नाभिमालभ्य प्रशित्रहरणं प्रक्षाल्य प्रक्षालितेनानेन प्रशित्रहरणेनाऽऽत्मानमभि-मुखेन हस्तेन च तथाभूतेनाऽऽत्मनः पुरतस्त्रिरपः सिञ्चेत्।

आपस्तम्बब्रह्मा- **मित्रस्य त्वा चक्षुषा प्रेक्षे** । इति प्रशित्रमवदीयमानं प्रेक्ष्य । **ऋतस्य पथा पर्येहि**, इत्यग्रेणाऽऽहवनीयं परिह्रिमाणं प्रेक्ष्य **सूर्यस्य स्वा चक्षुषा प्रतिपश्यामि**, इत्यासन्नमाह्रियमाणं प्रेक्ष्य **देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रति गृह्णामि** इति तदञ्जलिना प्रतिगृह्य **पृथिव्यास्त्वा नाभौ सादयामीडायाः ऽ पदे** । इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्डऽ सादयित्वा **अदब्धेनत्वा चक्षुषावेक्ष्ये देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या माददे** । इत्यङ्गुष्टेनोपमध्यमया चाङ्गुल्याऽऽदाय **अग्नेष्टवाऽऽस्येन प्रश्नामि ब्राह्मणस्योदरेण ब्रहस्पते ब्रह्मण** इत्यवेक्ष्य **इंद्रस्य त्वा जठरे सादयमिमीति** प्राशित्रं दन्तैरनभिमृद्य निगीर्य **या अप्स्वन्तदेवतास्ता इदऽ शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहा** इत्यपःपीन्वा **घसीना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामि** इति नभिदेशमभिमृश्य **वाङ्म आसन्** । इति मुखम् अभिमृश्य **नसोः प्राणः**, इति नासिके अभिमृश्य **अक्ष्णेक्ष्चक्षुः**, रिति चक्षुषी अभिमृश्य **कर्णयोश्रोत्रं** इति श्रोत्रे अभिमृष्य, **वाह्वोर्वलं** इति वाहू अभिमृष्य, **ऊर्वोरोजः** इति ऊरू अभिमृष्य **अरिष्टा विश्वान्यङ्गानि तनूः**, इत्यवशिष्टान्यभिमृश्याप उपस्पृश्य प्रक्षाल्य प्रशित्रमद्भिः पूरयित्वा **दिशोजिन्व**, इति पराचीनमेकप्रयत्नेन निनीय **मां जिन्व**, इति पुनरपो गृहीत्वाहृदयाभिमुखं निनयेत् ।

अध्वर्युः- इडापात्रमुपस्तीर्य **मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखाम् ।।** इत्याग्नेयस्य पुरोडाशस्य दक्षिणार्धात्प्रथममवदायावदानदेशयोर्मध्ये स्थिताद्धविरंशाद्द्वितीयमवदाय पश्चर्धात्तृतीयं पञ्चावत्तिनम्। पूर्वाधाच्च यजमानभागमिडायामवधाय हस्तं प्रक्षाल्य अनेनैवमन्त्रेण एवं प्रकारेण सर्वेषां हविष्सकाशात् द्विरवदाय यजमानभागं चावदाय शृतस्य दध्नश्च यजमान भागौच पृथक् पात्रेऽवदाय अवन्तरेडायामदाय (सौविष्टकृतावदानादैडावदानं ज्यायः कार्यम् ।)

यजमानः- **सुरूपवर्षवर्ण एहीमान्भद्रान्दुर्याꣳ अभ्येहिं मामनुव्रतान्यु शीर्षाणि मृद्व मृड एह्यादित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवं तेऽशीय ।** इतीडामवदीयमानामनुमन्त्रयेत ।

अध्वर्युः- अवत्तं पुरोडाशीयं यजमानभागमीषिद्दीर्घं कृत्वाऽऽज्येन सर्वतोंऽजनं कृत्वा ध्रवायाः समीपं गमयित्वा तथा च श्रृतदध्नोर्यजमानभागमाज्येन सर्वतोऽङ्क्त्वा ध्रुवायाः समीपं गमयित्वाऽभिघार्येडां होत्रे प्रदाय दक्षिणेन होतारमिडामनुसृजन्नेव पश्चाद्गत्वा होतुर्दक्षिणत असीनः प्राड्मुखो होतुः प्रदेशीन्या उत्तमे पर्वणी स्रुवेणाञ्जयात् । आपि वा होत्रे, इडामदत्वा प्राचीमिडामपोह्य स्वयं पश्चाद्गत्वा होतुर्दक्षिणत उदङ्मुख असीनः स्रुवेण होतुरङ्गुल्याः प्रदेशिन्याः पर्वणी अञ्ज्यात् ।

होता- इडामादाय तयाऽध्वर्युमतिक्रमन्तं दक्षिणतो हृत्वेडामन्तराध्वर्युमात्मानं च कुर्यात् । **वाचस्पतिना ते हुतस्येषे प्रणाय प्रश्नामि ।** इत्युत्तरपर्वलेपमुत्तरे, ओष्टे अभ्यात्मनिमृज्य। **मानसस्पतिना ते हुतस्योर्जेऽपानाय प्रश्नामि,** इति अधरोष्टे निमृज्योदकं स्पृस्ट्वाञ्जलिनेळां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादिडाया उदगङगुलिं पाणिमुपधायावान्तरेळामवदापयीताध्वर्युम् ।

अध्वर्युः- होतुः पुरस्तात्प्रत्यङ्मुख असीन उपस्प्टष्टोदकस्य होतुर्हस्ते इडागताज्यलेपादुपस्तीर्यावान्तरेळामवदायावदध्यात् ।

होता- अङ्गुल्यङ्गुष्टयोर्मध्येन प्रदेशेन स्वयमिडाया द्वितीयं अवान्तरेडामादधीत ।

अध्वर्युः- इडागाताज्यलेपादभिघारणं कुर्यत् । पञ्चावत्तिनां द्विरभिघारणं कुर्यात् ।

होता- प्रत्यालब्धामङ्गुष्टेनभिसंगृह्य प्रत्यहृत्यङ्गुलीरमुष्टिं कृत्वा दक्षिणत इळां परिगृह्यास्यमितां प्रणमंमितां वा कृत्वा **इळोपहूता सह दिवा वृहताऽऽदित्येनोपास्माँ इळा ह्वयतां सह दिवा वृहताऽऽदित्येनेळोपहूता । सहान्तिरिक्षेण वामदेव्येन वायुनेळोपास्माँ इळाह्व यतां सहन्तरिक्षेण वामदेव्येन वायुनेळोपहुता । सह पृथिव्या**

**रथंतरेणग्निनोपाम्माँ इळाह्वयतां सह पृथिव्या रथंतरेणाग्निना । उपहूता गावः सहाशिर उप मां गावः सह शिराह्वयन्तामुपहूता धेनुः सह ऋृषभोप मां धोनुः सह ऋृषभाह्वयतामु हूता गौर्घृपद्युपमांगौर्घृतपदीह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतरोह्वयन्ता तामपहूताः सखाभक्ष उप मां सखभक्षो ह्व यंतामुपहूतेळा वृष्टिरुपमामिळावृष्टि र्ह्वयताम्** इत्युपांशु **इळोपहूतोपहूतेळोपासामाँ इळा ह्वयतामिळोपहूता । मानवी घृत पदी मैत्रावरुणी व्रह्मदेवकृतमुपहुतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमावान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृयिवी पूर्वजे ऋतावरी देवी देवपुत्रे। उपहतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तमिति तस्मिन्नुपहूतः ।** इत्युच्चैरिळामुपह्वयीत । अध्वर्युर्यजमानौ उपहूयमानां इडां अन्वारभेताम् ।

अध्वर्युः- दैव्या अध्वर्यव उपहूता इति होतुर्वाक्यमभिज्ञाय उपहूतः पशुमानसानि, इति जपेत् ।

यजमानः- **भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिष एहीडएहि सुनृत एहि ।** इतीडाया उपांशूपहवे जपित्वा **चिदसि, मनाऽसि, धीरसि रन्ती रमतिः सूनः सूनरी । देवीर्देवैरभि मा निवर्तध्व२ स्योना स्योनेन घृतेन मा समुक्षत नम इदमुदं भिषगृषिर्व्रह्मा यद्दे समुद्रादुधचन्निव स्रुचा वागग्रे विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन् ।** इत्युच्चैरुपहवे जपित्वा **वायविडा ते माता,** इति होतारमीक्षमाणो वायुं मनसा ध्यात्वा, उपहू तोऽयं यजमान इति होतुर्वाक्यमभिज्ञाय **उपहूतः पशुमानसानि सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञोदिव२ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवा२ अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान् राय उत यज्ञाः सचन्तामस्मसु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी जुष्टिरसि जुषस्व नो जुष्टा नोऽसि जुष्टिं ते गमेयम् । अशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविण२ सवर्चसम् । संजयन्क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्य२ अधरान्त्सपत्नान् ।** इति जपित्वा, **इडाया अहं देव्यज्यया पशुमान्भूयासम् ।** इत्युपहूतमिडामनुमन्त्र्य **इडा धेनुः सहवत्सा न आगादुर्ज दुहाना पयसा प्रपीना । सा नो अन्नेन हविपोत गोभिरिडाऽभ्यस्मा२ आगात्।** इति भक्षायऽऽह्रियमाणामनुमन्त्रयेत । यजमानपञ्चमा इडायाः स्वं स्वं भागं भक्षणार्थं गृह्णीयुः ।

होता- **इळे भागं जुषस्व नः पिन्वगा जिन्वार्वतो रायस्पोषस्येशिषे तस्य नो रस्व । तस्य नो दास्तस्यस्ते भागमशीमहि । सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः। सर्वपुरुषा** इति वा । अवान्तरेडां प्रश्याऽऽचम्य तूष्णीमिडाभागं भक्षणार्थं गृहीतं प्राश्याऽऽचम्य वाग्यत आस्त आमार्जनात् ।

**आश्वलायनब्रह्मा-** तूष्णीमिडाभागं प्रश्यऽऽचम्य वाग्यत आस्त आ मार्जनात् ।

अध्वर्युयजमानाग्नीध्राः- **इडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणः स्याम सर्वात्मान सर्वगणाः ।।** इतीडायाः स्वस्वभागं प्ररश्याऽऽचम्य वाग्यता असत आ मार्जनात् । मन्त्रावृत्तिः प्रतिपूरुषम्

**आपस्तम्बब्रह्मा-** अध्वर्यवदेव प्राश्नीयात् ।

अध्वर्युयजमानाग्नीध्राः- **मनो ज्योतिर्जषतामाज्यं विच्छिन्नं यज्ञ॰ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वै देवा इह मादायन्ताम्** । इत्यन्तर्वेदि स्थिते प्रस्तरे मार्जयेयुः । (मार्जनं नामान्तर्वेद्यवस्थिते प्रस्तरे जलमासिच्यं तस्याधस्तद्धस्तेन जलं गृहीत्वा शिरस्यानयनम् ।) मन्त्रावृत्तिश्च प्रतिपूरुषम् । होतृब्रह्माणावेवं मार्जयियाताम्। आहवनीयपरिस्तरणैरञ्जलिमुदकधारणसमर्थं कृत्वाऽन्येन केनचित्परिकर्मिणाऽपामा-सेचनम्। आपस्तम्बब्रह्मणस्तु अध्वयुवन्मार्जनम् ।

अध्वर्युः- आग्नेयं पुरडाशं चतुर्धा कृत्वा वर्हिषदं वा कृत्वा चतुर्धा कुर्यत् ।

यजमानः- **ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपमदसादिशां ल्कृप्तिरासि दिशो मे कल्पन्तां कल्पन्तांमे दिशो दैवीश्च मानुपीश्चाहोरत्रे मे कल्पेतामर्धमासा मे कल्पन्तां मासा मे कल्पन्तामृतवो मे कल्पन्ता॰ संवत्सरो मे कल्पतां क्लृप्तिरसि कल्पतां मे** । इत्यध्वर्युणा चतुर्धा कृतं विर्हिपि सन्नं पुरोडाशं तन्त्रेणभिमृश्य, **अशानां त्वाऽऽशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः । इदं भूत स्याध्यक्षेभ्यो विधेम हविषा वयम् । ब्रध्न पाहि भजतां भागी भागं माऽभागो भक्त निरभागं भजामः । अपस्पिन्वौषधीर्जिन्व द्विपात्पाहि चतुष्पादव दिवो वृष्टिमेरय । ब्राह्मणानामिद॰ हविः सोम्याना॰ सोमपीथिनाम् । निर्भक्तोऽब्राह्ममणो नेहाब्राह्मणस्यास्ति** । सकृदुक्तेन मन्त्रेरण प्रतिदिशं विभागपूर्वकं गमयित्वा, इदं

**ब्रह्मणः, इदꣳ होतुः, इदमध्वर्योः, इदमाग्नीधः ।** इति प्रत्येकमादिश्य, **उपहूता द्यौः पितोप मां द्यौः पिताह्वयतामग्निराग्नीध्रादायुषे वर्चसे जीवा त्वैपुण्यायोपहूत पृथिवी मातोप मां माता पृथिवी ह्वयता मग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्याय ।** इत्याग्नीध्रभागस्य पुनर्व्यूहनं कुर्यादिदं व्यूहनमग्निध्रभगस्य मन्त्रपूर्वकं वैशेषिकम्।

अध्वर्यु- **इदं यजमानस्य,** इति यजमानभागं निर्दिश्य कस्मिंचिदेकस्मिन् पात्रे सकृदुपस्तीर्याऽऽग्नीध्रभागं द्वैधा कृत्वैकं भागं पात्रेऽवधाय पुनरुपस्तीर्यापरभगामवधाय द्विरभिघार्याग्नीध्रे तत्पात्रं प्रयच्छेत् । अपि वा कस्मिंचित्पात्रे द्विरुपस्तीर्य द्विराधाय द्विरभिघार्य तत्पात्रमाग्नीधे प्रयच्छेदिति वैशेषेकम् ।

आग्नीध्रः- विहाराद्वहिर्गत्वा पात्रस्थं स्वभागं गृहीत्वा **अग्नेरग्नीध्रमस्यग्नेः शामित्रमसि नमस्ते अस्तु मा मा हिꣳसीः ।** इति भक्षयित्वाऽऽचामेत् ।

अध्वर्युः- यथास्थानमासीनाभ्यां ब्रह्मयजमानाभ्यां तयोर्भागौ वेदेन हृत्वा प्रयच्छेत्।

ब्रह्मा- दत्तं स्वभागं प्रशित्रहरणे निदध्यात् ।

यजमानः- प्रशित्रहरणस्य पश्चात्कुशेषु स्वभागं निदध्यदयं नियम आपस्तम्बीययजमानस्य नास्ति। यत्र क्वा वा निहितेऽपि ना प्रत्यवायः।

अध्वर्युः- स्रुवेण होतुर्भागं होत्रे प्रयच्छेत्तथा स्वभागं जुह्वा स्वयं गृह्णीयात्।

होता- तूष्णीं भक्षयित्वाऽऽचामेत् ।

अध्वर्युः- **अन्तरिक्षस्य भागोऽसि,** इति स्वभागं प्राश्याऽऽचम्य दाक्षिणाग्नावन्वाहार्य महान्तमपरिमितमोदनं पचेत्क्षीरे पचेदित्येके।

आश्वलायनब्रह्मा- दक्षिणाग्नौ स्थितमन्वाहार्यं गत्वा प्रजापतेर्भगोऽस्यूर्जस्वान्पयस्वानक्षितिरसि मा मे क्षेष्टा अस्मिंश्च लोकेऽमुष्मिंश्च । इत्यन्वाहार्यमवेक्ष्य प्राणापानौ मे पाहि कामय त्वा, इत्यस्पृशन्नन्वाहार्यमवघ्रायाङ्गुष्ठोपकनिष्ठिकाभ्यां पुलककलामात्रमन्वाहार्याद्गृहीत्वा प्राशित्रहरणस्थस्वभागे निदध्यात् ।

अपास्तम्बब्रह्मा- **ब्रह्मन् ब्रह्माऽसि ब्रह्मणे त्वा हुताद्य मा मा हिꣳसीरहुतो मह्यꣳ शिवो भव।** इत्यन्तर्वेद्यामन्वााहार्यमासन्नमभिमृशेत् ।

अध्वर्युः- अन्वाहार्यमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासादयेत् ।

यजमानः- **ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपदसत्प्र जापतेर्भागोऽस्यूर्जस्वान्पय-**

स्वान्प्राणापानो मे पाहि समान व्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मेक्षिष्टा अमुत्रामुष्मिल्लोके । इयꣳस्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः । स दाधार पृथिवीमन्तारिक्षं दिवं च

तेनौदनेनतितरणि मृत्यम् । इत्यन्वाहार्यमासन्नमभिमृशेत् ।

अध्वर्युः- दक्षिणसद्भ्य उपहर्तवै, इति यजमानं संप्रैष्येत् ।

यजमानः- दक्षिणत एत ब्राह्मणा अयं व ओदनः, यथाभागं प्रतिगृह्णीध्वम् इति तेभ्योऽन्वाहार्यं दद्यात्।

ऋत्विजः- दक्षिणां प्रतिग्रहीष्यन्तः सप्तदशकृत्वो वायोरन्तराकर्षणरुपं निःश्वासं कुर्युः ।

अध्वयुराग्नीध्रापस्तम्भब्रह्मा च- देवस्यै त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि । राजा त्वा वरुणो नयतु देवि दक्षिणे ब्रह्मण औदनम् । तेनामृतत्वमश्याम् । वयो दात्रे । मयो मह्यमस्तु प्रतिगृहीत्रे । क इदं कस्मा अदात् । कामः कामाय । कामो दाता । कामः प्रतिग्रहीता । कामꣳ समुद्रमाविश । कामे न त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते काम दक्षिणा । उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु । इत्यन्वाहार्यं प्रतिगृह्णीयुः

होतृब्रह्माणौ- क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृहामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु । इत्यन्वाहार्यं प्रतीगृहीयाताम् ।

यजमानः- उत्तरतः परीत इति दक्षिणतः स्थितानृत्विजः संप्रैष्येत् ।

अध्वर्युः- हविःशेषानुदगुद्वास्य ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीत्परिधीꣳश्चाग्निं च सकृत्सकृत्संमृड्ढि । इति ब्रह्माणमग्नीध्रं च संप्रैष्येत् ।

आश्वलायनब्रह्मा- वृहस्पतिर्ब्रह्मा ब्रह्मसदन अशिष्ट वृहस्पते यज्ञमजूगुपः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि। भूर्भुवः स्वर्हवृहस्पतिप्रसूतः। इति जपित्वा, ॐ ३ प्रतिष्ठ, इत्यतिसृजेत् ।

आपस्तम्वब्रह्मा- देव सवितरेतत्ते प्राह तत्प्रच सुव प्र च यज वृहस्पतिर्ब्रह्मा स यज्ञं पाहि स

**यज्ञपतिं पाहि स मां पहि इत्युपांशूक्त्वा, ॐ ३ प्रतिष्ठ,** इत्युच्चैरनुजानीयात् ।

आग्नीध्रः- ब्रह्मणाऽनुज्ञातः - **एषा ते अग्ने समित्तया वर्धस्व चाऽऽचप्यायस्व वर्धतां च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा चाप्यायिषिमहि स्वाहा ।** इत्यानुयाजिकीं समिधामादध्यात् ।

यजमानः- **एषा ते अग्ने समित्तया वर्धस्व चाऽऽ चप्यायस्व वर्धतां च ते यज्ञपतिरा च प्यायतां वर्धिषीमहि च वयमा चप्यायिषीमहि ।** इत्याधीयमानामानुयाजिकीं समिध्रमनुमन्त्र्य, **अग्नय इदं न मम** इति त्यागं कृत्वा **यं ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन् । प्रजां च तस्य मूलं च नीचैर्देवा निवृश्चत । अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः । इध्मस्येव प्रक्षायतो मा तस्तोच्छेषि किंचन । यो मां द्वेष्टि जातवेदोयं चाहं द्वेष्मि यश्चमाम् । सर्वाꣳस्तानग्ने संदह याꣳश्चाहं द्वेष्मि ये च माम् ।** इत्यग्निमनुमन्त्रयेत ।

आग्नीध्रः- पूर्ववत्परिधीन्त्सकृत्सकृत्संमृज्य, **अग्ने वाजजिद्वाजं त्वा स सृवाꣳसं वाजं जिगिवाꣳसं वाजिनं वाजजितं वाजाजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय ।** इति सकृदग्निं प्रांचं संमृज्यात् ।

अध्वर्युः- इध्मसंनहनान्यद्भिः सꣳस्पृश्य **यो भूतानामधिपती रुद्रस्तन्तिचरोवृषा । पशूनस्माकं मा हिꣳसीरेतदस्तु हुतं तव स्वाहा ।** इत्यग्नौ प्रहृत्येध्मसंनहनान्यप उपस्पृशेत् ।

यजमानः- **भूतानामधिपतये रुद्राय तन्तिचराय वृष्ण इदं न मम,** इति त्यागं कृत्वाऽप उपस्पृश्य **वेदिर्बर्हिः श्रितꣳ हविरिध्मः परिधयः स्रुचः । आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः सं मे संनतयो नमन्तामिध्मसंनहने हुते ।** इतीध्मसंवहनानि हुतान्यनु मन्त्र्य **महाहविर्होता, सत्यहविरध्वर्युः, अच्युतपाजा अग्नीत् अच्युतमना उपवक्ता, अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ। अयास्य उद्गाता ।** इति पुरस्तादनुयाजानां वदेत् ।

अध्वर्युः- **सर्वमौभृतं जुह्वामनीय जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽदङ्मुखः स्थित्वा आ**

३ श्रा ३ वय, इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः- **अस्तु श्रौ३षट्**, इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः- **देवान् यज**, इति होतारं संप्रैष्येत् ।

होता- [96]**देवं बर्हिर्वसुवने वसुधेयस्य वैतू ३ वौ ३ षट्,**

अध्वर्युः- होत्रा **वौषडित्युक्ते** आघारसंभेदाग्रदेशपूर्वभागे समिधि प्रथममनुयाजं जुहुयात् ।

यजमानः- **अग्नय इदं न मम** इति त्यागं कृत्वा **बर्हिषोऽहं देवयज्यया प्रजावान् भूयासम् ।** इति हुतमनुयाजमनुमन्त्रयेत ।

अध्वर्युः- आश्राव्य प्रत्याश्राविते । **यज**, इति होतारं द्वितीयानुयाजार्थं संप्रैष्येत् ।

होता- **देवो नराशंसो वसुवने वसुधेयस्य वेतू३ वौ३षट्**, इति ।

अध्वर्युः- होत्रा **वौषडित्युक्ते**, आघारसंभेदस्य पूर्वभागे प्रथमानुयाजात्प्रत्यक्समिधि द्वितायानुयाजं जुहयात् ।

यजमानः- **अग्नय इदं न मम । नराशꣳसस्याहं देवयज्यया पशुमान्भूयासम्**, इति हुतमनुयाजमनुमन्त्रयेत ।

अध्वर्युः- आश्राव्य प्रत्याश्रविते । **यज**, इति होतारं तृतीयानुयाजार्थं संप्रैष्येत् ।

होता- **देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाड्याँ अपि प्रेयंते होत्रे अमत्सता ताँ ससनुषीं होत्रा देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीही३ वौ३षट्**, इति (अमत्सतेत्यत्रावसायानवसाय वा यजेत) ।

अध्वर्युः- होत्रा **वौषडित्युक्ते** द्वितीयानुयाजस्यापरेणोत्तममनुयाजं जुहुयात् ।

यजमानः- **अग्नय इदं न मम ।** इति त्यागं कृत्वा, **अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयम् ।** इति हुतमनुयाजमनुमन्त्रयेत ।

अध्वर्युः- प्रत्याक्रम्याऽऽयतने स्रुचौ सादयित्वा **वाजस्य मा प्रसवेनो दृगृभेणोदग्रभीत् ।** इति

---

96) इयमनुयाजस्य याज्या, तथाऽस्याः पूर्वमागूर्न कर्तव्या । एवमेव सर्वासामनुयाजयाज्यानाम् । "अगूर्याज्यादिरनुयाजवर्जम्" (आश्व शौ सू 1 । 5 । 4) वृत्तिः- सर्वत्र सर्वसामानुयाजवर्जितानां याज्यानामादावागूर्भवति ।

दक्षिणेन हस्तेनोत्तानेन सप्रस्तरां जुहूं कि चिदुद्यम्य **अथासपत्नाः इन्द्रो मे निग्राभेणाधराः अकः ।** इति सव्येन हस्तेनोपभृतमधो नियम्य **उद्ग्राभं च** इति जुहूं किंचिदुद्यम्य **निग्राभं च** इति दक्षिणेन हस्तेनोपभृतं निगृह्य **ब्रह्म देवा अवीवृधन् ।** इति दक्षिणेन हस्तेन जुहूं प्रचीं गमयित्वा **अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ।** इति संव्येन हस्तेनोपभृतं प्रतीचीं बहिर्वेदि निरस्याप उपस्पृश्य तां प्रोक्ष्यैनामप्युदाहरेत् ।

यजमानः- **वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाः इन्द्रो मे निग्राभेणधराः अकः । उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम् ।** इत्येतान्मन्त्रानध्वर्युणा सह जपेत् । **वाजस्य मा,** इत्यारम्य **नान्व्यस्यता**मित्यन्तान्मत्रांश्चातुःस्वर्येणाध्वर्युर्जयमानौ जपतः ।

अध्वर्युः- **वसुभ्यस्त्वा ।** इति जुह्वाज्यलेपेन मध्यमपरिध्येकदेशमाञ्ज्यात् ।

यजमानः- **वसून्देवान्यज्ञेनापिप्रेम् ।** इत्यज्यमानमध्यमं परिधिमनुमन्त्र्य **वसुभ्य इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- **रुद्रेभ्यस्त्वा ।** इति जुह्वाज्यलेपेन दक्षिणपरिध्येकदेशमञ्ज्यात् ।

यजमानः- **रुद्रान्देवान्यज्ञेनापिप्रेम् ।** इत्यज्यमानं दक्षिणं परिधिमनुमन्त्र्य **रुद्रेभ्य इदं न मम ।** इति त्यागं कुर्यात् ।

अध्वर्युः- **आदित्येभ्यस्त्वा ।** इति जुह्वाज्यलेपेनोत्तरपरिध्येकदेशमञ्ज्यात्।

यजमानः- **आदित्यान्देवान्यज्ञेनापिप्रेम् ।** इत्यज्यमानमुत्तरपरिधिमनुमन्त्र्य **आदित्येभ्य इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- वेद्यामेव बहिः प्रस्तराज्जुहूः सादयित्वा **संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवताम् ।** इति विधृतीभ्याः सह प्रस्तरमादाय बर्हिषि विधृती अपिसृज्य, **अक्तः रिहाणा वियन्तु वयः ।** इति प्रस्तराग्रं जुह्वामङ्क्त्वा **प्रजां योनिं मा**

**निर्मृक्षम्** । इत्युपभृति प्रस्तरमध्यमङ्क्त्वा **आप्यायन्तामाप ओषधयः** । इति ध्रुवायां प्रस्तरमूलमञ्ज्यात् । एवं त्रिः कार्यम् ।

यजमानः- **समङ्क्तां बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः । समिन्द्रेण विश्वेभिर्देवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहा ।** इत्यज्यमानं प्रस्तरमनुमन्त्रयेत।

अध्वर्युः- **आयुषे त्वा ।** इत्यक्तस्य प्रस्तरस्य तृणमपिदाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणिभ्यां **सह शाखया**[97] प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्याऽऽसीनः **आ३श्रा३वय ।** इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः- **अस्तु श्रौ३षट्,** इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः- **इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि,** इतिं होतारं संप्रैष्येत् ।

होता- **इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोऽच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्यो रोमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवीस्ताम् । शंगयीर्जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ। वृष्टिद्यावा रीत्यापा शंभुवौ मयोभूवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदि** इत्यवसाय **अग्निरिदं हविरजुषतावीवधृत महो ज्यायोऽकृत । सोम इदं हविरजुषतावीवृधत महो ज्यायोऽकृत ।** (उपांशु) **विष्णुः** (उच्चैः) **इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । महेन्द्र इदं हविरजुपतावीवृधत महो ज्यायोऽकृत । देवा आज्यपा आज्यमजुपन्तावीवृधन्त महो ज्यायोऽकृत । अस्यामृधेध्दोत्रायां देवंगमायामाशास्तेऽयं यजमानो** दत्तात्रेयशर्मा हस्तः । इति यजमाननाम नक्षत्रनाम च निर्दिश्य,

पौर्णमास्याम्- **अग्निषोमाविदं हविरजुषेतामवीवृधेतां महो जयायोऽक्रातम् । इन्द्रो वैमृध इदं इविरजुषतावीवृधत महो ज्यायोऽकृत,** इत्येतदुपांशुयाजदेवतायाः कीर्तनानन्तरमुक्त्वा देवा आज्यपा इत्यादि समानम् ।

अमावास्यायामसोमयाजिनः- उपंशुयाजदेवतायाः कीर्तनानन्तरम् । **इन्द्राग्नि इदं इविरजुपेतामवीवृधेतां महो ज्यायोक्रातम्** । इत्युक्त्वा देवा आज्यपा इत्यादि

---

97) पौर्णमास्यां शाखाया अभावात्केवलं प्रस्तरं गृहीत्वा, अमावास्यायामासोमयाजिनोऽप्येवमेव।

**समानम् । आयुरशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करण माशास्ते दिव्यं धामाऽऽशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुषाः । इष्टं च वित्तं चो भे चनो द्यावापृथिवी अंहसस्पातामेह गातिवमस्येदं नमो देवेभ्यः ।** इति ब्रूयात् ।

अध्वर्युः- अनूच्यमाने सूक्तवाके, अग्निरिदꣳ हविरजुषतेति होतुरिभीज्ञाय **मरुतां पृषतयः स्थ दिवं गच्छ ततो नो वृष्टिमेरय** । इति तिर्यञ्चं हस्तं धारयन् कर्षन्निव **सह शाखया**[98] प्रस्तरमाहवनीये प्रहरेत् ।

यजमानः- **अग्नय इदं न मम । अग्ने**[99]**रहमुज्जितिमनूज्जेषम् । सोमा येदं न मम । सोमस्याहमुज्जितिमनूज्जेषम् । अग्नय इदं न मम । अग्नेरहमुज्जितिमनूज्जेषम्। विष्णव इदं न मम । महेन्द्रा येदं न मम । महेन्द्रस्याहमुज्जितिमनूज्जेषम् । देवेभ्य आज्यपेभ्य इदं न मम अग्नये स्विष्ट कृत इदं न मम् । अग्नेःस्विष्ट कृतोऽह मुज्जिति मनू ज्जेषम् ।** अमावास्यायामसोसमयाजिनः, विष्णव इदं न मम, इत्यनन्तरम् । **इन्द्राग्निभ्यामिदं न मम । इन्द्रग्न्योहमुज्जितिमनूज्जेषम्** । ततो देवभ्य आज्यपेभ्यः, इत्यादि समानम् ।

---

98) पौर्णमास्यां केवलं प्रस्तरमेवाऽवहवनीये प्रहरेत् । अमावास्यायामसोमयाजिनोऽप्येवमेव ।

99) अस्त्यत्र काचित्संशयभूमिका सा चैवम् --- उपांशुयाजदेवताया आज्यपानां देवतानां उज्जितिमन्त्रेणनुमन्त्रणमस्ति वा ना वा । अस्तीत्याह यथालिङ्गमिति सूत्रकारवचनात् । शाखान्तरीयकल्पकारैः स्पष्टमुक्तत्वाच्च । यथाऽऽह बोधायनः --- अग्नेरहमुज्जिपमिति यथेष्ट नाम यथादेवतं यजनम् । यथादेवतमन्यदिति कात्यायनः। तस्मादापस्तम्बसूत्रानुसारिभिरपि उपांशुयाजदेवताया आज्यपानां देवतानां चोज्जितिमन्त्रेणानुमन्त्रणं कार्यम्। अयमभिप्रायः पूर्वपक्षिणः, होता यां यां देवतां सूक्तवाकेऽनुब्रूते तां देवतां यजमान उज्जितिमन्त्रेणानुमन्त्रयेदित्यर्थः। अत्र ब्रूमः-- आपस्तम्बसूत्रे तु यथालिङ्गमित्युक्तत्वादेव तैः सूक्तवाकान्तर्गतसर्वदेवतानामनुमन्त्रणं न कार्यमिति सिध्यति । यथालिङ्गमिति यथाम्नानमित्यर्थः । तैत्तिरीयेतु उपांशुदेवताज्यपादेवतावर्जमेवाऽऽम्नायं श्रूयते । तथैवानुमन्त्रणंसूत्रकाराभिप्रेतमिति तु यथालिङ्गशब्देनाऽऽह। यदि सर्वा देवता सूक्तवाकीया अनुमन्त्रयितव्याः स्युस्तर्हि शाखान्तरीयवद्यथेष्टमित्येव ब्रूयात् । लिङ्गं ज्ञापकम् । यथोज्जितिमन्त्राणां ज्ञापकं तथाऽनुमन्त्रयेत । ज्ञापकमाम्नानं तन्नुक्तमेव। न हि शाखान्तरीयविधिरीत्या स्वशास्त्रमन्यथयितुं युक्तम् । भाष्यकारस्तु यथाबौधायनकल्पं बभाषे तैत्तिरीयके । गुणोपसंहारन्याये नानुक्तदेवतानामप्यनुरमन्त्रणं काङ्क्षसे चेद्यथालिङ्गमित्यस्यैवार्थकल्पनाप्रयासो वृथा । गुणानुपसंहारमीत्येव ब्रूहि । आचर चन कश्चिद्दोष इत्यनुज्ञा मात्रम् न विधिरिति विभाव्यताम्। तस्मादापस्तम्बीयानां तत्सूत्रानुयायिनां चोपांशुदेवताया आज्यपानां देवतानां चानुमन्त्रणमुज्जितिमन्त्रेण कार्यमेवेति न विधिरिति ज्ञेयम्। उपदेशमतेत्वस्तीति रामाण्डारप्रभृतयः प्रतिपन्नाः ।

**पौर्णमास्याम्-** विष्णव इदं न मम । ततः ----- **अग्नीषोमाभ्यामिदं न मम । अग्नीषोमयोरहमुज्जितिमनुज्जेषम् । इन्द्राय वैमृधायेदं न मम इन्द्रस्य वैमृधस्याहमुज्जि तिम नूज्येषम् ततोदेवभ्य अज्य** इत्यादि समानम् । अमावास्यायांमसोमयाजिनः **विष्णव इदं नमम् इत्यनंतरमिन्द्राग्निभ्या मिदं नमम इन्द्राग्न्योरहमुज्जिति मनूज्जेषम्** । यदा चास्य होता नाम गृह्णीयात्तदा, **एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याऽऽशीर्देवान्गम्याज्जुष्टज्जुष्टतरा पण्यात्पण्यतरारेडता मनसा देवान् गम्याद्यज्ञो देवन् गच्छतु यज्ञो म आगाच्छतु** इति सूक्तवाकमनुमन्त्रयेत ।

**अध्वर्युः-** होतुराशीर्वचनकले न्यञ्चं हस्तं पर्यावर्तयन् **अग्नीद्गमय,** इत्याग्नीध्रं संप्रैष्येत् ।

**आग्नीध्रः-** **रोहितेन त्वाऽग्निर्देवतां गमयतु । हरिभ्यां त्वेन्द्रो देवतां गमयतु। एतशेन त्वा सूर्यो देवतां गमयतु,** इत्येतैस्त्रिभिर्मन्त्रैः अञ्जलिना यथोद्यतः सर्वः प्रस्तरोऽग्नि गमितः स्यात्तथोद्यम्य प्रहरेत् ।

**यजमानः-** **रोहितेन त्वाऽग्निर्देवतां गमयतु । हरिभ्यां त्वेन्द्रो देवतां गमयतु । एतशेन त्वा सूर्यो देवतां गमयतु** । इत्यग्नीधा प्रह्रियमाणं प्रस्तरमनुमन्त्रयेत ।

**आग्नीध्रः-** **अनुप्रहर,** इत्यध्वर्युमाह ।

**अध्वर्युः-** यत्प्रस्तरात्तृणमपात्तं तत् **स्वगा तनुभ्यः,** इत्याहवनीये प्रहरेत् ।

**यजमानः-** **तनुभ्य इदं न मम इति** त्यागं कृत्वा **दिवः खीलोऽवततः पृथिव्या अभ्युत्थितः। तेन सहस्रकाणडेन द्विषन्तं शोचयामसि । द्विषन्मे वहु शोच त्वोंषधे मो अहं शुचम्** । इति प्रस्तरतृणे प्रह्रियमणे जपेत् ।

**अध्वर्युः-** **एतदेतदेतत्,** इति त्रिरङ्गुल्या निर्दिश्य तृणम् **आयुष्पा अग्नेऽस्यायुर्मे पाहि चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि** । इत्याग्निमभिमन्त्र्य **ध्रुवासि** । इत्यन्तर्वेदि पृथिवीमभिमृशेत्।

**आग्नीध्रः-** **संवदस्व,** इत्यध्वर्युमाह ।

समानम् । **आयुरशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्या-माशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करण माशास्ते दिव्यं धामाऽऽशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुषाः । इष्टं च वित्तं चो भे** चनो **द्यावापृथिवी अंहसस्पातामेह गातिवमस्येदं नमो देवेभ्यः ।** इति ब्रूयात् ।

**अध्वर्युः-** अनूच्यमाने सूक्तवाके, अग्निरिदꣳ हविरजुषतेति होतुरिभीज्ञाय **मरुतां पृषतयः स्थ दिवं गच्छ ततो नो वृष्टिमेरय** । इति तिर्यञ्चं हस्तं धारयन् कर्षन्निव **सह शाखया**[98] प्रस्तरमाहवनीये प्रहरेत् ।

**यजमानः- अग्नय इदं न मम । अग्ने[99]रहमुज्जितिमनूज्जेषम् । सोमा येदं न मम । सोमस्याहमुज्जितिमनूज्जेषम् । अग्नय इदं न मम । अग्नेरहमुज्जितिमनूज्जेषम्। विष्णव इदं न मम । महेन्द्रा येदं न मम । महेन्द्रस्याहमुज्जितिमनूज्जेषम् । देवेभ्य आज्यपेभ्य इदं न मम अग्नये स्विष्ट कृत इदं न मम् । अग्नेःस्विष्ट कृतोऽह मुज्जिति मनू ज्जेषम् ।** अमावास्यायामसोसमयाजिनः, विष्णव इदं न मम, इत्यनन्तरम् । **इन्द्राग्निभ्यामिदं न मम । इन्द्रग्न्योहमुज्जितिमनूज्जेषम् ।** ततो देवभ्य आज्यपेभ्यः, इत्यादि समानम् ।

---

98) पौर्णमास्यां केवलं प्रस्तरमेवाऽवहवनीये प्रहरेत् । अमावास्यायामसोमयाजिनोऽप्येवमेव ।

99) अस्त्यत्र काचित्संशयभूमिका मा चैवम् --- उपांशुयाजदेवताया आज्यपानां देवतानां उज्जितिमन्त्रेणनुमन्त्रणमस्ति वा ना वा । अस्तीत्याह यथालिङ्गमिति मूत्रकारवचनात् । शाखान्तरीयकल्पकारैः स्पष्टमुक्तत्वाच्च । यथाऽऽह बौधायनः --- अग्नेरहमुज्जिपमिति यथेष्टं नाम यथादेवतं यजनम् । यथादेवतमन्यदिति कात्यायनः। तस्मादापस्तम्बसूत्रानुसारिभिरपि उपांशुयाजदेवताया आज्यपानां देवतानां चोज्जितिमन्त्रेणानुमन्त्रणं कार्यम्। अयमभिप्रायः पूर्वपक्षिणः, होता यां यां देवतां सूक्तवाकेऽनुब्रूते तां देवतां यजमान उज्जितिमन्त्रेणानुमन्त्रयेदित्यर्थः। अत्र ब्रूमः-- आपस्तम्बसूत्रे तु यथालिङ्गमित्युक्तत्वादेव तैः सूक्तवाकान्तर्गतसर्वदेवतानामनुमन्त्रणं न कार्यमिति सिध्यति । यथालिङ्गमिति यथाम्नानमित्यर्थः । तैत्तिरीयेतु उपांशुदेवताज्यपादेवतावर्जमेवाऽऽम्नायं श्रूयते । तथैवानुमन्त्रणंसूत्रकाराभिप्रेतमिति तु यथालिङ्गशब्देनाऽऽह। यदि सर्वा देवता सूक्तवाकीया अनुमन्त्रयितव्याः स्युस्तर्हि शाखान्तरीयवद्यथेष्टमित्येव ब्रूयात् । लिङ्गं ज्ञापकम् । यथोज्जितिमन्त्राणां ज्ञापकं तथाऽनुमन्त्रयेत । ज्ञापकमाम्नानं तनूक्तमेव। न हि शाखान्तरीयविधि-रीत्या स्वशास्त्रमन्यथयितुं युक्तम् । भाष्यकारस्तु यथाबौधायनकल्पं बभाषे तैत्तिरीयके । गुणोपसंहारन्याये नानुक्तदेवतानामप्यनुरमन्त्रणं काङ्क्षसे चेद्यथालिङ्गमित्यस्यैवार्थकल्पनाप्रयासो वृथा । गुणानुपसंहरमीत्येव ब्रूहि । आचर चन कश्चिद्दोष इत्यनुज्ञा मात्रम् न विधिरिति विभाव्यनाम्। तस्मादापस्तम्बीयानां तत्सूत्रानुयायिनां चोपांशुदेवताया आज्यपानां देवनानां चानुमन्त्रणमुज्जितिमन्त्रेण कार्यमेवेति न विधिरिति ज्ञेयम्। उपदेशमतेत्वस्तीति रामाण्डारप्रभृतयः प्रतिपन्नाः ।

पौर्णमास्याम्- विष्णव इदं न मम । ततः ----- **अग्नीषोमाभ्यामिदं न मम । अग्नीषोमयोरहमुज्जितिमनुज्जेषम् । इन्द्राय वैमृधायेदं न मम इन्द्रस्य वैमृधस्याहमुज्जि तिम नूज्येषम् ततोदेवभ्य अज्य** इत्यादि समानम् । अमावास्यायांमसोमयाजिनः **विष्णव इदं नमम् इत्यनंतरमिन्द्राग्निभ्या मिदं नमम इन्द्राग्न्योरहमुज्जिति मनूज्जषेम्** । यदा चास्य होता नाम गृह्णीयात्तदा, **एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याऽऽशीर्देवान्गम्याज्जुष्टज्जुष्टतरा पण्यात्पण्यतरारेडता मनसा देवान् गम्याद्यज्ञो देवन् गच्छतु यज्ञो म आगाच्छतु** इति सूक्तवाकमनुमन्त्रयेत ।

अध्वर्युः- होतुराशीर्वचनकले न्यञ्चं हस्तं पर्यावर्तयन् **अग्नीद्गमय,** इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः- **रोहितेन त्वाऽग्निर्देवतां गमयतु । हरिभ्यां त्वेन्द्रो देवतां गमयतु। एतशेन त्वा सूर्यो देवतां गमयतु,** इत्येतैस्त्रिभिर्मन्त्रैः अञ्जलिना यथोद्यतः सर्वः प्रस्तरोऽग्नि गमितः स्यात्तथोद्यम्य प्रहरेत् ।

यजमानः- **रोहितेन त्वाऽग्निर्देवतां गमयतु । हरिभ्यां त्वेन्द्रो देवतां गमयतु । एतशेन त्वा सूर्यो देवतां गमयतु** । इत्यग्नीधा प्रह्रियमाणं प्रस्तरमनुमन्त्रयेत ।

आग्नीध्रः- **अनुप्रहर**, इत्यध्वर्युमाह ।

अध्वर्युः- यत्प्रस्तरात्तृणमपात्तं तत् **स्वगा तनुभ्यः**, इत्याहवनीये प्रहरेत् ।

यजमानः- **तनुभ्य इदं न मम इति** त्यागं कृत्वा **दिवः खीलोऽवततः पृथिव्या अभ्युत्थितः। तेन सहस्रकाणडेन द्विपन्तं शोचयामसि । द्विपन्मे वहु शोच त्वोंपधे मो अहं शुचम्** । इति प्रस्तरतृणे प्रह्रियमणे जपेत् ।

अध्वर्युः- **एतदेतदेतत्**, इति त्रिरङ्गुल्या निर्दिश्य तृणम् **आयुष्पा अग्नेऽस्यायुर्मे पाहि चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि** । इत्याग्निमभिमन्त्र्य **धुवासि** । इत्यन्तर्वेदि पृथिवीमभिमृशेत्।

आग्नीध्रः- **संवदस्व**, इत्यध्वर्युमाह ।

अध्वर्युः- **अगानग्नीत्**, इत्याग्नीध्रं पृच्छेत् ।

आग्नीध्रः- **अगन्म** इत्यध्वर्युमाह ।

अध्वर्युः- **श्रा३वय**, इत्याग्नीध्रमाह ।

आग्नीध्रः- **श्रौ३षट्** इत्यध्वर्यूमाह ।

अध्वर्युः- मध्यमं परिधिमन्वारभ्य **स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शयोब्रू३हि** इति होतारं संप्रैष्येत् ।

होता- **तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं जतुष्पदे** । इति ब्रूयात् ।

अध्वर्यु- अनुच्यमाने शंयुवाके **यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं ते तमनु जोपं भरामि नेदेष त्वदपचेतयातै** । इति मध्यमं परिधिमाहवनीये प्रहृत्य **यज्ञस्य पाथ उप समितम्** । इति दक्षिणोत्तरौ परिधी युगपत्प्रहृत्य उत्तरार्ध्यस्य परिधेरग्रमङ्गारेषूपगूहेत् ।

यजमानः- **वि ते मुञ्चामि रशना वि रश्मीन्वियोक्त्रा यानि परिचर्तनानि धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतासु** । इति परिधिषु विमुच्यमानेषु जपित्वा **अग्नय इदं न मम**, इति त्यागं कृत्वा **विष्णोः शंयोरहं देव यज्यया यज्ञेन प्रतिष्ठां गमेयम् । यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्टस्वोप ते यज्ञ नम उप ते नम उप ते नमः** । इति जपेत् ।

अध्वर्युः- **यजमानं प्रथत**, इति परिधीनभिमन्त्र्य जुह्वामुपभृतोऽग्रमवधाय **सꣳस्रावभागाः स्थेषा वृहन्तः प्रस्तरेष्टा वर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्वर्हिषि मादयध्वꣳस्वाहा** । इति सꣳस्रावेणाभिजुहुयात् ।

यजमानः- **वसुभ्यो रुद्रेभ्य आदित्येभ्यः सꣳस्रावभागेभ्य इदं न मम** । इति त्यागं कुर्यात्। **इष्टो यज्ञो भृगुभिर्द्रविणोदा यतिभीराशीर्दा वसुभिराशीर्वान् । अथर्वभिस्तस्य मेष्टस्य वीतस्य द्रविणेहाऽऽगमेः** इति सꣳस्रावꣳ हुतमनुमन्त्रयेत ।

**ऋत्विजः-** हविःशेषानत्रैव भक्षयेयुः ।

**अध्वर्युः-** जुहूपभृद्गतानाज्यलेपान्प्रक्षाल्य, सस्रुवे जुहूपभृतावादद्यत् ।

**होता-** **वेदोऽसि वेदो विदेय** । इति वेदं गृह्णीयात् ।

**आग्नीध्रः-** स्फ्यमाज्यस्थालीमुदककमण्डलुं चाऽऽदाद्यात् ।

**अध्वर्युः-** अग्रेण गार्हपत्यं दक्षिणेनातिक्रम्य गार्हपत्यस्य पश्चात् गच्छेत् ।

**होता-** **उदायुषा स्वायुषोदोषधीनाँ रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अनु ।** इत्युत्थायोत्तरेण गार्हपत्यं प्रत्यागच्छेत् ।

**अग्नीध्रः-** उत्तरेण गार्हपत्यं होत्रध्वर्योरग्रे गच्छेत् । अग्नीध्रप्रथमाः प्रत्यग्गच्छेयुरिति सूत्रादाग्नीध्रस्याग्रे गमनं प्राप्तम् ।

**अध्वर्युः-** **अग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तम् ।** इति कस्तम्भ्यां जुहूपभृतौ सादयित्वा **धुरि धुर्यौ पातम् ।** इति युगधुरोः प्रापयेत् । स्फ्ये वा स्रुचौ सादयेत् ।

**अध्वर्युः-** अपरेण गार्हपत्यं दक्षिणत ऊर्ध्वज्ञुरुपविशेत् ।

**होता-** अपरेण गार्हपत्यमध्वर्योरुत्तरत उपस्थेनोपविशेत् ।

**अग्नीध्रः-** अपरेण गार्हपत्यमध्वर्योरुत्तरत दक्षिणाभिमुखः स्फ्यं गृहीत्वोर्ध्वज्ञुरुपविशेत् एतेनार्थाद्धोतुरुपवेशनं मध्ये सिद्धं भवति ।

**अध्वर्युः-** वेद उपभृतं कृत्वा तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् **सोममयानुब्रू३हि,** इति होतारं संप्रेष्य पुनः स्रुवेण त्रिवारमाज्यं जुह्वां गृहीत्वा चतुर्गृहीतं संपादयेत् ।

**होता-** **अप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भावा वाजस्य संगथो३म् ।** इति मन्द्रस्वरेण पुरोनुवाक्यां ब्रूयात् ।

**अध्वर्युः-** **आ३श्रा३वय** । इत्यग्नीध्रं संप्रेष्येत् ।

**अग्नीध्रः-** **अस्तु श्रौ३षट्,** इति प्रत्याश्रावयेत् ।

**अध्वर्युः-** **सोमं यज,** इति होतारं संप्रेष्येत ।

**होता-** **ये३ यजमहे सोमं सं ते पयांसि समुयन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः। आप्यायमानो अमृताय सोम दिवि श्रवां स्युत्तमानि धिष्वा३ वौ३ षट् ।** इती

**अध्वर्युः-** होत्ता **वौषडित्युक्ते** गार्हपत्याग्नेरुत्तरार्धे जुहूयात् ।

**यजमानः-** **सोमयेदं न मम ।** इति त्यागं कृत्वा **सोमस्याहं देवयज्यया सुरेता रेतो धिषीय।** इति हुतमनुमन्त्रयेत ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् **त्वष्ट्रेऽनुब्रू३हि**, इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **इह त्वष्टारमग्रियं विश्वरूपमुपह्वये। अस्माकमस्तु केवलो३म्** । इति

अध्वर्युः- आश्राव्य प्रत्याश्राविते ।

अध्वर्युः- **त्वष्टारं यज, इति होतारं संप्रैष्यत्** ।

होता- **ये३ यजामहे त्वष्टारं तन्नस्तुरीपमधपोषयित्नु देव त्वष्टर्वि रराणस्यस्व । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट्** इति ।

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्याग्नेरुत्तरार्धे सोमाहुतेर्दक्षिणत उत्तरतो वा जुहुयात् ।

यजमानः- **त्वष्ट्र इदं न मम**, इति त्यागं कृत्वा **त्वष्टुरहं देवयज्यया पशूना२ँरूपं पुषेयम्** । इति हुतमनुमन्त्रयेत ।

अध्वर्युः- आहवनीयतः, गार्हपत्ये परिश्रितेऽपरिश्रिते वा तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् **देवानां पत्नीभ्योऽनुब्रू३हि**, इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- [100]**देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छतो३म्** । इति पुरोनुवाक्यामनुब्रूयात् ।

अध्वर्युः- आश्राव्य प्रत्याश्राविते **देवानां पत्नीर्यज**, इति होतारं संप्रैष्येत् ।

होता- **ये३ यजामहे देवानां पत्नीरुत ग्नाव्यन्तु देवपत्नीरिन्द्राण्यग्नय्यश्विनी राट्। आरोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनां३ वौ३षट्** ।

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्याग्नेरुत्तरार्धे जुहुयात् ।

यजमानः- **देवानां पत्नीभ्य इदं न मम**, इति त्यागं कुर्यात् ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् [101]**राकाया अनुब्रू३हि**, इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

---

100) आपस्तम्बानामप्ययमेव क्रमस्तत्सूत्रे तूभयथा दर्शनात् । केचिदभियुक्ता (राकादियागानन्तरं) देवपत्नीयागं कुर्वन्ति ।

101) राकासिनीवालीकुहूद्देश्यका यागा आश्वलायनीयानां कामप्रयुक्ताः । आपस्तम्बीयानां विकल्पः । अकामेनाप्यनुष्ठातव्या इति ।

होता- **राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतुत्मना । सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यो३म्** । इति पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः- आश्राव्य प्रत्याश्राविते **राकां यज**, इति होतारं संप्रैष्येत् ।

होता- **ये३ यजामहे राकां यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपाऽऽगहि सहस्रपोषं सुभगे रराणा३ वौ३षट् ।**

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्ये जुहुयात् ।

यजमानः- **राकाया इदं न मम**, इति त्यागं कृत्वा **राकाया अहं देवयज्यया प्रजावान् भूयासम्** । इत्यनुमन्त्रयेत् ।

पत्नी- **राकाया अहं देवयज्यया प्रजावती भूयासम्** । इत्यनुमन्त्रयेत ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् **सिनीवाल्या अनुब्रू३हि**, इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नो३म् ।**

अध्वर्युः- आश्राव्य प्रत्याश्राविते **सिनीवालीं यज**, इति होतारं संप्रैष्येत् ।

होता- **ये३यजामहे सिनीवालीं या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतना३ वौ३षट् ।**

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्ये जुहुयात् ।

यजमानः- **सिनीवाल्या इदं न मम**, इति त्यागं कृत्वा **सिनीवाल्या अहं देवयज्यया पशुमान्भूयासम्** । इत्यनुमन्त्रयेत ।

पत्नी- **सिनीवाल्या अहं देवयज्यया पशुमती भूयासम्** । इत्यनुमन्त्रयेत।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन्**कुह्वा अनुब्रू३हि**, इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेमो३म् ।**

अध्वर्युः- आश्रव्य, प्रत्याश्राविते । **कुहूं यज,** इति होतारं संप्रैष्येत् ।

होता- **ये३ यजामहे कुहूं कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातू३ वौ३षट् ।**

अध्वर्युः- होत्रा वौषडित्युक्ते गार्हपत्ये जुहुयात् ।

यजमानः- **कुह्वा इदं न मम,** इति त्यागं कृत्वा । **कुह्वा अहं देवयज्यया पुष्टिमान् पशुमान् भूयासम्** इत्येनुमन्त्रयेत।

पत्नी- **कुह्वा अहं देवयज्यया पुष्टिमती पशुमती भूयासम् ।** इत्यनुमन्त्रयेत।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय जुह्वां गृह्णन्, **अग्नये गृहपतयेऽनुब्रू३हि,** इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः । देवानामुत यो मर्त्यानां यजिष्ठः स प्रयजतामृतावो३म् ।** इति

अध्वर्युः- आश्रव्य, प्रत्याश्राविते । **अग्निं गृहपतिं यज,** इति होतारं संप्रेष्येत् ।

होता- **ये३ यजामहेऽग्निं गृहपतिं हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे। सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक् संमिमीहि श्रवांसी ३ वौ३षट्,** इति

अध्वर्युः- होत्रा **वौषडित्युक्ते** सोमत्वष्ट्राहुत्योर्मध्ये जुहुयात् ।

यजमानः- **अग्नये गृहपतय इदं न मम,** इति त्यागं कृत्वा **देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासम् ।** इत्यनुमन्त्रयेत ।

अध्वर्युः- स्रुवेण होतुः प्रदेशिन्या उत्तमे पर्वणी अज्यात् ।

होता- **वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामि ।** इत्युत्तरपर्वलेपमुत्तर ओष्ठेऽभ्यात्ममात्माभिमुखं पाणितलं कृत्वा निमृज्य **मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नमि ।** इत्यधरपर्वलेपमधर ओष्ठे निमृज्योदकं स्पृष्ट्वाऽऽज्यं पाणितलेऽवदापयीत।

अध्वर्युः- उपस्पृष्टोदकस्य होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्येदाग्नीध्रस्य हस्ते षडाज्यबिन्दूनिडामवद्येत् ।

**अध्वर्युराग्नीध्रः पत्नी च-** उपहूयमानामाज्येडामन्वारभेरन् ।

होता- **इळोपहूता सह दिवा बृहताऽऽदित्येनोपास्माँ इळा ह्वयतां सह दिवा बृहताऽऽदित्येनेळोपहूता । सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इळा ह्वयतां सहान्तरिक्षेण वामदेव्येन वायुनेळोपहता। सह पृथिव्या रथंतरेणाग्निनोपास्माँ इळा ह्वयतां सह पृथिव्या रथंतरेणाग्निना । उपहूता गावः सहाशिर उप मां गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सह ऋषभोप मां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखा भक्ष उप मां सखा भक्षो ह्वयतामुपहूतेळा वृष्टिरुप मामिळा वृष्टिर्ह्वयताम्** । इत्यपांशु । **इळोपहूतेळोपास्माँ इळा ह्वयतामिळोपहूता । मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः**, इति मन्त्रेणाऽऽज्येडामुपह्वयेत ।

यजमानः- **इडाऽस्माननुवस्तां घृतेन यस्याः पदे पुनते देवयन्तः । वैश्वानरी शक्करी वावृधानोप यज्ञमस्थित वैश्वदेवी**, इत्याज्येडामनुमन्त्रयेत।

होताऽऽग्नीधश्च- स्वस्वहस्तस्थामाज्येडां तूष्णीं प्राश्याऽऽचामेताम्।

अध्वर्युः- [102]अस्मिन् काले स्रुवेणाऽऽज्यं गृहीत्वा पत्न्यान्वारब्धायां **सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेताꣳस्वाहा** । इति गार्हपत्ये जुहुयात् ।

यजमानः- **दिवि ज्योतिषे, अजराय परमात्मन इदं न मम**, इति त्यागं कृत्वाऽन्तर्वेदि वेदं निधाय **वेदोऽसि वित्तिरसि पाप्मनो व्यावृत्तिं विदेय कर्मासि करुणमसि क्रियासꣳसनिरसि सनिताऽसि सनेयं घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं**

---

102) पत्न्यामनालम्भुकाद्यवस्थायां विद्यमानायामपि संपत्नीयहोमो भवत्येव, अनालम्भुकत्वादिना पत्न्यामविद्यमानायाम्-आशासाना मर्हीनां पयआज्यावेक्षणादिलोपवदस्य संपत्नीयस्यापि, इति लोपभ्रान्तिः स्यात्तां निवर्तयितुं होमोऽपि भवत्येवेत्याह । अन्वारब्धायामिति कर्तरि निष्ठायां कथमिदमिति चेत्तत आह। पत्न्यभावेऽपि न निवर्तते होमः । अप्रविशन्त्या अपि पत्न्याः फलं विद्यत एवेति पत्न्याश्चानालम्भुकायाः कर्तृत्वान्वयाभावेऽप्यपूर्वान्वयाधिकारस्य विद्यमानत्वात् । न च पत्नीसंयाजाङ्गं संपत्नीयहोमः ।

वेदो ददातु वाजिनम् । इति वेदमभिमृशेत् ।

होताऽध्वर्युर्वा- वेदं पत्न्यै प्रदाय **वेदोऽसि वित्तिरसि विदेय कर्मासि करणमसि क्रियासंसनिरसि सनिताऽसि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं। यं बहव उपजीवन्ति यो जनानामसद्वशी । तं विदेय प्रजां विदेय कामाय त्वा।** इति पत्नीं वाचयेत् । यदि पत्नी प्रजा मे स्यादिति कामयेत तदा वेदस्य जानुसदृशेन प्रदेशेन पत्नी स्वनाभिमालभेत । कामनाभावेऽपि वाचनं भवत्येव ।

होता- **प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाऽबध्नात्सविता सुशेवः । ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि ।** इति पत्न्या योक्त्रं विमुच्य तद्योक्त्रं द्विगुणं कृत्वा प्रत्यग्गार्हपत्यात्प्राक्पाशं निधाय योक्त्रस्योपरिष्टाद्वेदतृणान्युदगग्राणि निधाय वेदतृणेभ्यः पुरस्तात्तृणैः संश्लिष्टं पूर्णपात्रं निधायाभिमृशन् पूर्णपात्रमभिमृशन्तीम्- **पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठाः ।** इति वाचयित्वा **प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशिमासाः पितरो मार्जयन्ताम्। प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम्। उदीच्यां दिश्याप ओषधयो वनस्पतयोमार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा ।** इति यथालिङ्गं पूर्णपात्रादुदकमुदुक्षन्नुदुक्षन्तीं **पत्नीं वाचयित्वा** योक्त्रस्याधस्तात्पत्न्यञ्जलिमुत्तानमात्मनश्च सव्यं पाणिमुत्तानं निधाय पूर्णपात्रं निनयन् **माऽहं प्रजां परासिचं या नः सयावरीः स्थ न । समुद्रे वो निनयानि स्वं पाथो अपीथ ।** इति पत्नीं वाचयेत् ।

अध्वर्युः- दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधाय चतुर्गृहीत आज्ये फलीकरणानोप्य **अग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुपदा योनिᳪ स्वाहा ।** इति दक्षिणाग्नौ जुहुयात् ।

**यजमानः-** **अग्नये, अदब्धायवे, अशीततनव इदं न मम ।** इति त्यागं कृत्वा **या सरस्वती विशो भगीना तस्यां मे रास्व तस्यास्ते भक्तिवानो भूयास्म,** इति फलीकरणहोमे हुते मुखं विमृज्याप उपस्पृशेत् ।

अध्वर्युः- चतुर्गृहीत आज्ये पिष्टलेपानोप्य **उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहा।**

यजमानः- **विश्वेभ्यो देवेभ्य इदं न मम,** इति त्यजेत् ।

अध्वर्युः- जुह्वां त्रिः आज्यं गृहित्वा **या सरस्वती विशो भगीना तस्यै स्वाहा** । इति दक्षिणाग्नौ जुहुयात् ।

यजमानः- **सरस्वत्यै विशो भगीनाया इदं न मम,** इति त्यजेत् ।

अध्वर्युः- **या सरस्वती वेशभगीना तस्यै स्वाहा** । इति दक्षिणाग्नौ जुहुयात्।

यजमानः- **सरस्वत्यै वेशभगीनाया इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- **इन्द्रोऽपानस्य केहमनसो वेशान् कुरु सुमनसः स जातान्त्स्वाहा** । इति दक्षिणाग्नौ जुहुयात् ।

यजमानः- **इन्द्राय सुमनस इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- पत्न्याः सयोक्त्रेऽञ्जलौ तूष्णीं पूर्णपात्रमानयेत् ।

पत्नी- **समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याऽहं गच्छे समात्मा तनुवा मम** । इत्यानीयमाने पूर्णपात्रे जपित्वा तदुदकं भूमौ निनीयाऽऽर्द्रेण हस्तेन मुखं विमृज्य **पुष्टिमती पशुमती गृहमेधिनी भूयासम्** । इत्युत्तिष्ठेत् ।

अध्वर्युः- यथेतमाहवनीयं गच्छेत् ।

होता- वेदतृणानि दक्षिणेन हस्तेनाग्रप्रदेशे गृहीत्वाऽविधुन्वन्-**तन्तुतन्त्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्वणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम्** । इति गार्हपत्यादारभ्य सव्येन हस्तेन संततं स्तृणन्नाहवनीयं गत्वा शेषं निधाय प्रत्यगुदगाहवनीयादवस्थायाऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यमादाय आग्नीध्रेणान्वारब्धः **अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयासा वयसा कृतोऽयासन्हव्यमूहिषे या नो धेहि भेषजं** स्वाहा ।

यजमानः- **अयसेऽग्नय इदं न मम,** इति त्यागं कुर्यात् ।

होता- पूर्ववत्स्रुवेणाज्यं गृहीत्वा-अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा ।

यजमानः- देवेभ्य इदं न मम, इति त्यागं कुर्यात् ।

होता- स्रुवेण आज्यं गृहीत्वा-इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूह्ळमस्य पांसुरे स्वाहा ।

यजमानः- विष्णव इदं न मम,

होता- स्रुवेण आज्यं गृहीत्वा भूः स्वाहा ।

यजमानः- अग्नय इदं न मम, इति त्यागं कुर्यात् ।

होता- स्रुषेण आज्यं गृहीत्वा भुवः स्वाहा ।

यजमानः- वायव इदं न मम, इति त्यागं कुर्यात् ।

होता- स्रुवेणाज्यमादाय स्वः स्वाहा ।

यजमानः- सूर्यायेदं न मम, इति त्यागं कुर्यात् ।

होता- स्रुवेणाऽऽज्यं गृहीत्वा भूर्भुवः स्वः स्वाहा ।

यजमानः- प्रजापतय इदं न मम, इति त्यागं कुर्यात् ।

होता- पूर्ववत्स्थित एव, ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः । इत्युपस्थाय तीर्थेनैव निष्क्रामेत् ।

अध्वर्युः- आज्यस्थाल्या जुह्वां स्रुवेण वाऽऽज्यं गृहीत्वाऽऽसीनो दक्षिणं जान्वाच्य वक्ष्यमाणामन्त्रैः सर्वप्रायश्चित्तान्याहवनीये जुहुयात् ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाꣳ हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् स्वाहाकृताऽऽहुतिरेतु देवान्त्स्वाहा ।। 1 ।।

यजमानः- ब्रह्मण इदं न मम ।

अध्वर्युः- आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च

हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् स्वाहाकृताऽऽहुतिरेतु देवान्त्स्वाहा ।। 2 ।। इति जुहुयात् ।

यजमानः- यज्ञायेदं न मम ।

अध्वर्युः- यद्वो देवा अतिपादयानि वाचा चित्प्रयतं देवहेडनम् । अरायो अस्माꣳ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहा ।।3।।

यजमानः- मरुद्भ्य इदं न मम ।

अध्वर्युः- ततं म आपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते । अयꣳ समुद्र उत विश्वभेषजः स्वाहाकृतस्य समु तृष्णुतर्भुवः स्वाहा ।।4।। इति जुहुयात्।

यजमानः- ऋभुभ्य इदं न मम ।

अध्वर्युः- उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमꣳ स्वाहा ।। 5 ।। इति जुहुयात् ।

यजमानः- सूर्यायेदं न मम ।

अध्वर्युः- उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳ स्वाहा ।। 6 ।।

यजमानः- सूर्यायेदं न मम ।

अध्वर्युः- चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणास्याग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ।।7।।

यजमानः- सूर्यायेदं न मम ।

अध्वर्युः- इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युराचके स्वाहा ।। 8 ।।

यजमानः- वरुणायेदं न मम ।

अध्वर्युः- तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्रमोषीः स्वाहा ।। 9 ।।

यजमानः- वरुणायेदं न मम ।

अध्वर्यु- त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासि सीष्ठाः । यजिष्ठो वह्नि तमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुग्ध्यस्मत्स्वाहा ।। 10।।

यजमानः- अग्नीवरुणाभ्यामिदं न मम ।

अध्वर्युः- स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि स्वाहा ।।11।। इति जुहुयात्।

यजमानः- अग्नीवरुणाभ्यामिदं न मम ।

अध्वर्युः- त्वमग्ने अयाऽस्ययासन्मनसा हितः । अयासन्हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहा ।। 12 ।।

यजमानः- अग्नाय, असय इदं न मम । (अग्नय इदमिति वा)

अध्वर्यः- प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता वभूव । यत्कामास्ते जुहु-मस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाꣳ स्वाहा ||13||

यजमानः- प्रजापतय इदं न मम ।

अध्वर्युः- इष्टेभ्यः स्वाहा ||14||

यजमानः- इष्टेभ्य इदं न मम ।

अध्वर्युः- वषडनिष्टेभ्यः स्वाहा ||15||

यजमानः- अनिष्टेभ्य इदं न मम ।

अध्वर्युः- भेषजं दुरिष्ट्यै स्वाहा ||16||

यजमानः- दुरिष्ट्या इद नमम

अध्वर्युः- निष्कृत्यै स्वाहा ||17||

यजमानः- निष्कृत्या इदं न मम

अध्वर्युः- दौराध्यै स्वाहा ||18||

यजमानः- दौराध्या इदं न मम

अध्वर्युः- दैवीभ्यस्तनूभ्यः स्वाहा ||19||

यजमानः- दैवीभ्यस्तनूभ्य इदं न मम ।

अध्वर्युः- ऋध्यै स्वाहा ||20||

यजमानः- ऋध्या इदं न मम ।

अध्वर्युः- समृद्ध्यै स्वाहा ||21|| ।

यजमानः- समृद्ध्या इदं न मम, इति त्यागं कुर्यात् ।

अध्वर्युः- अयाश्चग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहा ||22||

यजमानः- अग्नय इदं न मम । अयसेऽग्नय इदं न मम, इति वा ।

अध्वर्युः- यदस्मिन्यज्ञेऽन्तरगाममन्त्रतः कर्मतो वा । अनयाऽऽहुत्या तच्छमयामि सर्वे तृप्यन्तु देवा आवृषन्तां घृतेन स्वाहा ||23||

जयमानः- देवेभ्य इदं न मम ।

अध्वर्युः- आज्ञातमनाज्ञातममतं च मतं च यत् । जातवेदः संधेहि त्वꣳ हि वेत्थ यथातथꣳ स्वाहा ||24||

यजमानः- अग्नये जातवेदस इदं न मम ।

अध्वर्युः- यदकर्म यन्नाकर्म यदत्यरेचि यन्नात्यरेचि । अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वꣳ स्विष्टꣳ सुहुतं करोतु स्वाहा ||25||

यजमानः- अग्नये स्विष्टककृत इदं न मम ।

अध्वर्युः- यदस्य कर्मणोऽत्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद्विद्वान्सर्वꣳ स्विष्टꣳ सुहुतं करोतु स्वाहा ||26||

जयमानः- अग्नये स्विष्टकृत इदं न मम ।

अध्वर्युः- यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जाहि स्वाहा ||27||

यजमानः- इन्द्राय मघवत इदं न मम ।

अध्वर्युः- स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः स्वाहा ||28||

यजमानः- इन्द्राय वृत्रघ्न इदं न मम, इन्द्रायाभयंकरायैदं न मम इति वा ।

अध्वर्युः- आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम स्वाहा ||29||

यजमानः- इन्द्राय हरिवत इदं न मम, इति ।

अध्वर्युः- अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथातꣳ स्वाहा ||30||

यजमानः- अग्नय इदं न मम ।

## पुरुषसंमितो

अध्वर्युः- यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाꣳ ऋतुशो यजाति स्वाहा ||32||

यजमानः- अग्नय इदं न मम ।

अध्वर्युः- यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताꣳ स्वाहा ||33||

यजमानः- अग्नये श्रद्धायै देव्या इदं न मम । अग्नये श्रद्धाया इदं न मम इति वा ।

अध्वर्युः- अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य । सन्वन्सनिꣳ सुविमुचा विमुञ्च धेह्यास्मासु द्रविण जातवेदो यच्च भद्रꣳ स्वाहा ||34||

यजमानः- अग्नये जातवेदस इदं न मम ।

अध्वर्युः- ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता पुरुत्रा । तेभ्यो न इन्द्रः सवितोत विष्णुर्विश्वे देवा मुञ्चन्तु मरुतः स्वस्त्या स्वाहा ||35||

यजमानः- वरुणेन्द्रसवितृविष्णुविश्वदेवमरुद्भ्य इदं न मम ।

अध्वर्युः- यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिꣳसीरेतदस्तु हुतं तव स्वाहा ||36||

यजमानः- भूतानामधिपतये रुद्राय तन्तिचराय वृष्ण इदं न मम, रुद्रायेदं न मम, इति वा त्यागं कृत्वा, अप उपस्पृशेत् ।

अध्वर्युः- उद्बुध्यस्वाग्ने प्रति जागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च । पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्वयि तन्तुमेतꣳ स्वाहा ||37||

यजमानः- अग्नय इदं न मम ।

अध्वर्युः- उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳ श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा ||38||

यजमानः- वरुणायेदं न मम ।

अध्वर्युः- भूः स्वाहा ||39||

यजमानः- अग्नय इदं न मम ।

अध्वर्युः- भुवः स्वाहा ||40||

यजमानः- वायव इदं न मम ।

अध्वर्युः- सुवः स्वाहा ||41||

यजमानः- सूर्यायेदं न मम ।

अध्वर्युः- भूर्भुवः सुवः स्वाहा ||42||

यजमानः- प्रजापतय इदं न मम । (एता द्विचत्वारिंशदाहुतयो दर्शपूर्णमासयोः सर्वप्रायश्चित्तत्वेन दर्श पूर्णमासाध्वर्युसूत्र एव सूत्रकारेण सूत्रिताः । ततः पुनः सिंहावलोक न्यायेन प्रायाश्चित्तसूत्रे, इष्टेभ्यः स्वाहेत्यष्टावाहुतीर्दर्शपूर्णमासिकैः सर्व प्रायाश्चित्तैर्विकल्पेरन्

इति सूत्रयांबभूव । तस्माद्द्विचत्वात्वारिंशदाहुतयोऽथवाऽष्टावाहुतयोऽध्वर्युणा दर्श-पूर्णमासयोर्होतव्या इति फलितम् । ताश्चाष्टौ, **इष्टेभ्यः स्वाहेत्यारभ्य समृद्ध्यै स्वाहेति** पर्यन्तं होतव्या इति । द्विचत्वारिंशदाहुतिष्वेव प्राक्पठितास्तत एवावगन्तव्याः।)

**यजमानः-** ऋक्तो यज्ञभ्रेषप्रायाश्चित्तं करिष्ये । इति संकल्पयेत् ।

**ब्रह्मा-** [103]गार्हपत्यस्य पश्चादुपविश्य, उपस्थस्योत्तानत्वाविरोधेन दक्षिणं जान्वाच्य स्रुवेणाऽऽज्य-माज्यस्थाल्या गृहीत्वा **भूः स्वाहा,** इति गार्हपत्ये जुहुयात् ।

**यजमानः-** **अग्नय इदं न मम,** इति त्यागं कृत्वा यजुष्टो यज्ञभ्रेषप्रायश्चित्तं करिष्ये, इति संकल्पयेत् ।

**ब्रह्मा-** दक्षिणाग्नेः पश्चादुपविश्य, उपस्थस्योत्तानत्वाविरोधेन दक्षिणं जन्वाच्याऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यं गृहीत्वा **भुवः स्वाहा,** इति दक्षिणाग्नौ जुहुयात् ।

**यजमानः-** **वायव इदं न मम,** इति त्यागं कृत्वा सर्वतो यज्ञभ्रेषप्रायश्चित्तं करिष्ये, इति संकल्प-येत् ।

**ब्रह्मा-** आहवनीयस्य पश्चादुपविश्योपस्थस्योत्तानत्वाविरोधेन दक्षिणं जान्वाच्याऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यं गृहीत्वा **भुर्भुवः स्वःस्वाहा,** इत्याहवनीये जुहुयात् ।

**यजमानः - प्रजापतय इदं न मम ।**

**अध्वर्युः-** तूष्णीमाज्यस्थाल्याः स्रुवेणाऽऽज्यं गृहीत्वा **आप्यायतां ध्रुवा घृतेन यज्ञंयज्ञं प्रति-देवयद्भ्यः । सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन् ।** इति ध्रुवामाप्याय्य, अन्तर्वेदिगतं सर्वं बर्हिर्गृहीत्वाऽन्तर्वेद्यूर्ध्वस्तिष्ठन् बर्हि ध्रुवाया अधस्तात्कृत्वा **देवा गातुविदो गातुं वित्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा ।** इति बर्हिरनुप्रहृत्य **वाते धाः स्वाहा,** इति ध्रुवया समिष्टयजुर्जुहुयात् ।

**यजमानः-** **देवेभ्यो गातुविद्भ्यो ब्रह्मण इदं न मम ।**

**अध्वर्युः-** प्रवमति यजमाने यजमानभागं **प्रजापतेर्विभान्नाम लोक स्तस्मिꣳस्त्वा दधामि**

---

103) आपस्तम्बीययजमानस्यत्वध्वर्युरेव जुहुयात् । न ब्रह्मा जुहुयात् । तदा भुर्भुवस्वः स्वाहा, इत्यस्य स्थाने, भुर्भुवः सुवः स्वाहा, इति पठनीयः ।

**सह यजमानेन** । इति ध्रुवायामवधाय देवा गातुविद इत्यादि पूर्ववज्जुहुयात् ।

यजमानः- **वसुर्यज्ञो वसुमान्यज्ञस्तस्य मा यज्ञस्य वसोर्वसुमतो वस्वागच्छतु यज्ञेश्वरप्रसादो म आगच्छतु** । इति समिष्टयजुर्हुतमनुमन्त्र्य, **सं यज्ञपतिराशिषा**, इति स्वभागं प्राश्याऽऽचम्य [104]**दधिक्राव्ण अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र ण आयूꣳषि तारिषत्** । इति सायंदोहं प्राश्याऽऽ चम्य, **इदꣳ हविः प्रजननं मे अस्तु दशवीरꣳ सर्वगणꣳ स्वस्तये । आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि । अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त रायस्पोष मिषमूर्जमस्मासु दीधरत्स्वाहा । इद ꣳ हविः** इत्यादि लोकसनीत्यन्तं वा प्रात र्दोहं प्राश्याऽऽचामेत् ।

अध्वर्युः- **अभिस्तृणीहि परि धेहि वेदिं जामिं मा हिꣳसीरमुया शयाना । होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्ने** । इति होतृषदनैर्वेदिमभिस्तीर्य तूष्णीमन्तर्वेदि प्रणीता आसाद्य **को वो योक्षीत्स वो विमुञ्चतु** । इति मन्त्रमुक्त्वा प्रणीतासु संततामुदकधाराꣳस्रावयेत् ।

यजमानः- **सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः** । इति प्रणीतासूदकधारायामानीयमानायां जपित्वा **प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणायां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायांदिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम्**। इति तत्तन्मन्त्रप्रकाशितायां दिशि तेन तेन मन्त्रेणोर्ध्वमपः सिक्त्वा **समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः**। इत्यान्तर्वेदि प्रणीताशेषं निनीय **यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्धि सरस्वति । या सरस्वती वैशम्भल्या**

---

104) पौर्णमास्यां सायंदोहप्रातर्दोहप्राशनं नास्ति । अमावास्यायाममोमयाजिनोऽपि नास्ति सांनाय्याभावात् ।

**तस्यां मे रास्व तस्यास्ते भक्षीय तस्यास्ते भूयिष्ठभाजो भूयास्म ।** इति मुखं विमृशेत् । एष वै दर्शपूर्णमासयोरवभृथः ।

अध्वर्युः - **यं देवा मनुष्येषूपवेषमधारयन् । ये अस्मदपचेतसस्तानस्मभ्यमिहाकुरु । उपवेषोपविड्ढि नः प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पदो ध्रुवाननपगान्कुरु ।** इत्युपवेषमुत्करे पुरस्तात्प्रत्यञ्चमुपगूहेत् । (उपवेषगूहनं त्वेवम् - अनेन मन्त्रेणोपवेषमुत्करे पूर्वभागे प्रत्यगग्रं गूढं कुर्यात् । अग्रमुत्करे प्रवेश्य मूलं बहिर्नावशेषयेत् । किंतु स्थाविष्ठान्मूलादारभ्य कृत्स्नं प्रवेशयेदित्यर्थः) **यानि घर्मे कपालान्युपचिन्वन्ति वेधसः । पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ।** इति गणरुपेण प्रथितानां कपालानां समूहनं कृत्वा संख्यायोद्वासयेत् । प्रतिकपालयोगं मन्त्रमावर्त्य संख्यायोद्वासयेत्कपालानि, यजमानोऽप्येवमेव मन्त्रमावर्तयेत् ।

यजमानः- **यानि घर्मे कपालन्युपचिन्वन्ति वेधसः । पूष्णास्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ।** इत्यध्वर्युणा सह जपेत् ।

आश्वलायन ब्रह्मा- तूष्णीं स्वभागं प्राश्याऽऽचम्य प्रत्यगुदगाहवनीयादवस्थाय, आज्यस्थाल्याः स्रुवेणाऽऽज्यमादायाऽऽग्नीध्रेणान्वारब्धः सन्, (होत्रानन्वारब्धश्चेत्) **अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्वमया असि । अयासा वयसा कृतोऽयासन्हव्यमूहिषेऽया नो धेहि भेषजं स्वाहा ।** इत्याहवनीये जुहुयात् ।

यजमानः- **अयसेऽग्नय इदं न मम ।**

ब्रह्मा- पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण सृहीत्वा, **अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा ।** जुहुयात् ।

यजमानः- **देवेभ्य इदं न मम ।**

ब्रह्मा- पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा, **इदं विष्णुं र्विचक्रमे त्रेधा निदधेपदम् समूहळमस्य पांसुरे स्वाहा ।**

यजमानः- **विष्णव इदं न मम ।**

ब्रह्मा- पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा **भूः स्वाहा ।**

यजमानः- **अग्नय इदं न मम ।**

ब्रह्मा- पूर्ववत् आऽऽज्यं स्रुवेण गृहीत्वा **भुवः स्वाहा ।**

यजमानः- **वायव इदं न मम ।**

ब्रह्मा- पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा **स्वः** स्वाहा ।

यजमानः- **सूर्यायेदं न मम ।**

ब्रह्मा- आऽऽज्यं स्रुवेण गृहीत्वा **भूर्भुवः** स्वः स्वाहा ।

यजमानः- **प्रजापतय इदं न मम ।**

ब्रह्माऽऽग्नीध्रश्च- **ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः ।** इत्युपस्थाय यथेतं निष्क्रामेयाताम् ।

आपस्तम्बब्रह्मा- **दिवो भागोऽसि,** इति स्वभागं प्रश्याऽऽ चम्य, **अयाडग्निर्जातवेदा अन्तरः पूर्वो अस्मन्निषद्य । सन्वत्सनिः सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जात-वेदो यच्च भद्रम् । प्र णो यक्ष्यभिवस्यो अस्मान्त्सं नः सृज सुमत्या वाज-वत्या।** इत्याहवनीयमुपस्थाय यथेतं प्रत्येयात् । प्रायश्चित्तहोमो नास्ति तस्य ।

यजमानः- **विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवी मनु विक्रमे निर्भक्तः स यं द्विष्मः** ||1|| **विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु विक्रमे निर्भक्तः स यं द्विष्मः** ||2|| **विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनुविक्रमे निर्भक्तः स यं द्विष्मः** ||3|| इति दक्षिणे वेद्यन्ते सव्यं पादं पुरस्तान्नातिहरन्दक्षिणेन पदा, उत्तरोत्तरं क्रममधिकान्तरालं प्राक्स्त्रीन्विष्णुक्रमान् (पाद-विक्षेपान्) प्रक्रम्य तत्रैव स्थित्वा (तूष्णीं चतुर्थपादं क्रान्त्वाऽवस्थाय वा) **विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभेन छन्दसा दिशोऽनु विक्रमे निर्भक्तः स यं द्विष्मः** ||4|| इति जपित्वा तत्रैव स्थित्वा, **अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्ना वषट्कारेण वज्रेण पूर्वजान्भ्रातृव्यानध-रान्पादयाम्येवनान्वाधेप्रत्यैनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं**

च वयं द्विष्मो विष्णोः क्रमेणात्येनान्क्रामामि ||1|| इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण सहजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भूमिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्यैनान्क्रामामि ||2|| विश्वेभिर्देवेभिः पृतना जयामि जगतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणापरजान्भ्रातृव्यानधरान्पादयाम्यवैनान्बाधे प्रत्येनान्नुदेऽस्मिन्क्षयेऽस्मिन्भू-मिलोके योऽस्मान्द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि ||3||
इति विष्ण्वतिक्रमाञ्जपित्वा तत्रैव स्थित्वा ये देवा यज्ञहनः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषः पृथिव्या-मध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। आऽगन्म मित्रा-वरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति । नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिवः । ये देवा यज्ञहनोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषोऽन्तरिक्षेऽध्या-सते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । यास्ते रात्रीः सवि-तर्देवयानीरन्तरा द्यावापृथिवी वियन्ति । ग्रहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाꣳसि ।। ये देवा यज्ञहनो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जात वेदः। तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आधेह्येनम्।
इत्यतिमोक्षाञ्जपित्वा दक्षिणाऽतिक्रम्य, अगन्म सुवः सुवरगन्म संदृशस्ते मा च्छित्सि यत्ते तपस्तस्मै ते माऽऽवृक्षि सुभूरसि श्रेष्ठोरश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहीदमहं पाप्मानं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तारिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं

द्विष्मः सं ज्योतिषा भूवम् । उद्यन्नद्य मित्रमहः सपत्नान्मे अनीनशः दिवैनान्वि-द्युता जहि निम्रोचन्नधरान्कृधि । उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य । उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय । शुकेषु मे हरिमाणꣳ रोपणाकासु दध्मसि । अथो हारिद्रवेषु मे हरिमाणं निदध्मसि । उदगा-दयमादित्यो विश्वेन सहसा सह । द्विषन्तं मम रन्धयन्मो अहं द्विषतो रधम्। यो नः शपादशपतो यश्च नः शपतः शपात् । उषाश्च तस्मै निम्रुक्च सर्वं पापꣳसमूहताम्। इत्यादित्यमुपस्थाय, ऐन्द्रीमाहृतमन्वावर्ते, इत्यात्मानं प्रदक्षिण-मावर्त्य पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीः, इत्युक्त्वा समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषः । इति प्रसव्यमात्मान-मावर्त्य, आहवनीयमग्रेण गत्वाऽऽहवनीयस्य प्रत्युगुदगुपविश्य, समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासम् । इत्याहवनीयं समिन्धनैः प्रज्वाल्योत्थाय वसुमान्यज्ञो वसीयान् भूयासम् । यो नः सपत्नो योरणो मर्तोऽभिदासति देवाः । इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन । इत्याहवनीयमुपस्थाय गार्हपत्यस्य पश्चादुपविश्य तूष्णीं गार्हपत्यं समिन्धनैः प्रज्वाल्योत्थाय, अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् । अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत्पोषꣳ रयिं मयि । अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमाः। इति गार्हापत्यमुपस्थााय तत्रैव स्थित्वा तामाशिषमाशासे रामचन्द्रशर्मणे ज्योतिष्मतीम्। इति पुत्रवानुक्त्वा पुत्राणां दित्वे वहुत्वे तु प्रतिपुत्रनाम रामचन्द्रस्थान ऊहयित्वा ज्योतिष्म-तीमित्यन्तं यजुरावर्त्य ज्योतिषे तन्तवे त्वा रामचन्द्रशर्मन्ननु मा तन्वच्छिन्नो दैव्यस्तन्तुर्मामनुष्यश्छेदि दिव्याद्धाम्नो मा च्छित्सि मा मानुषात् । इति प्रिय-पुत्र नाम गृहीत्वा प्रियपुत्राणां द्वित्वे वहुत्वे तु प्रतिप्रियपुत्रनाम रामचन्द्रस्थाने, आमन्त्र-णविभक्त्योहयित्वा मानुषादित्यान्तं यजुरावर्त्य (प्रियपुत्राभावे च यजुर्लोपः कार्यः) दक्षिणाग्नेः पश्चादुपविश्यतूष्णीं दक्षिणाग्निं समिन्धनैः प्रज्वाल्योत्थाय, अग्ने वह्ने

स्वदिते नस्तनये पितुं पच । शं तोकाय तनुवे स्योनः । इति दक्षिणग्निमुपस्थाय ज्योतिषे तन्तवे त्वा रामचन्द्रशर्मन्ननु मा तत्वच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि दिव्याद्धाम्नो मा च्छित्सिमा मानुषात् । इति प्रियपुत्रेत्यादि प्राग्वन्निर्णयेनाऽऽवर्त्य ज्योतिषे तन्तवे त्वा, इत्यन्तर्वेद्युपविश्य ज्योतिरसि तन्तवे, इति जपित्वा, पुत्राभाववता यजमानेनायं जपो न कर्तव्यः । पुत्राणां द्वित्वे बहुत्वे च प्रतिपुत्रं जपावृत्तिः कार्या, वेदशेषमुपस्थ आधायान्तर्वेद्यासीनः - ये देवा यज्ञहनः पृथिव्यामध्यासते। अग्निमतिभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति । नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिवः । ये देवा यज्ञहनोऽन्तरिक्षेऽध्यासते । वायुमतिभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति । गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाꣳसि । ये देवा यज्ञहनो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् । ये देवा यज्ञमुषो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम्। येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आधेह्येनम् । इत्यतिमोक्षञ्जपित्वा दक्षिणाऽतिक्रम्य कस्त्वा युनक्ति स त्वा विमुञ्चतु इति यज्ञं विमुच्य, अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । वायो व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । आदित्यव्रतमचारिषं तदशकं तन्मेऽराधि । व्रातानां व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि । इति व्रतं विसृज्य यज्ञो बभूव स आ बभूव स प्रजज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन्करोतु । वयꣳस्यामपतयोरयीणाम् । इति यज्ञस्य पुनरालम्बं जपित्वा प्राङुत्क्रम्य गोमाꣳअग्नेऽवि माꣳ अश्वी यज्ञो नृवत्सखा सदमिद प्रमृष्यः ।

**इडावाऽ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः समावान्** । इति गोमतीं जपित्वा **यज्ञ शं च म उप च म आयुश्च मे बलं च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्ठो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्व**। इति जपित्वा गार्हपत्यस्य, पश्चादुपविश्य **वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम्** । इत्यप उपस्पृश्य **ब्राह्मणाऽस्तर्पयितवै** । इति परिकर्मिणः संप्रेष्येत् । **अनेन दर्शयागेन / पौर्णमास यागेन भगवानग्निरूपः परमेश्वरः प्रीयताम्** । इत्युक्त्वा विहाराद्बहिरागत्य द्विराचामेत्।

**यजमानः-** देशान्तरे वसन्नौपवसथ्येऽहनि यजनीये चाहनि विहारदेशमभिमुखो याजामानाध्वर्यव-काण्डोक्तान्सर्वानपि याजमानमन्त्रांश्च जपेत् ।

इति दर्शपूर्णमासप्रयोगः ।

# दर्शपूर्णमासप्रयोगसंभारस्मरणम् ।

| संभारनाम | प्रयोजनम् |
|---|---|
| अग्न्यागारम् | विहाराद्यर्थम् । |
| अग्न्यायतनम् | अग्निस्थापनाद्यर्थम् । |
| जायापती | कर्मानुष्ठानार्थम् । |
| ऋत्विजः | याजनार्थम् । |
| उदकम् | आचमनाद्यर्थम् । |
| दर्भासनम् | उपवेशनार्थम् । |
| शरावाः | अग्निप्रणयनाद्यर्थम् । |
| दर्भाः | पवित्राद्यर्थम् । |
| यज्ञियकाष्ठानि | अग्निसमिन्धनाद्यर्थम् । |
| पलाशशाखा | वत्सापाकरणार्थम् । |
| असिदः | दर्भाद्याहरणार्थम् । |
| दर्भमुष्टयः | प्रस्तराद्यर्थम् । |
| रज्जुद्वयम् | दर्भसमित्बन्धनार्थम् । |
| परिधयो बाहुमात्राः | आहवनीयपरिधानार्थाः । |
| अरत्निमात्राः सामिधेन्यः | आहवनीयसमिन्धनार्थम् । |
| आघारसमिद्द्वयम् | आघारार्थम् । |
| अनूयाजसमित् | अनूयाजार्थम् । |
| परिवासनशकलम् | सांयदोहप्रक्षेपार्थम् । |
| सवत्साः षड् गावः | सांनायय्यसंपादनार्थम् । |
| दोग्धा | गोदोहनार्थम् । |
| गोशकृत् | कुम्भीलेपनाद्यर्थम् । |
| दधि | आतञ्जनार्थम् । |
| स्फ्यः | वेद्युद्धननादिकार्यार्थम् । |
| कपालानि | पुरोडाशाधिश्रयणार्थम् । |
| अग्निहोत्रहवणी | प्रोक्षणाद्यर्थम् । |
| शूर्पम् | निर्वापाद्यर्थम् । |
| कृष्णाजिनम् | व्रीह्यवघाताद्यर्थम् । |
| शम्या | दृषदत्याधानाद्यर्थम् । |
| उलूखलम् | व्रीह्यादिहविरावपनार्थम् । |

| संभारनाम | प्रयोजनम् |
| --- | --- |
| मुसलम् | अवहननार्थम् । |
| दृषदुपले | व्रीह्यादिहविःपेषणार्थम् । |
| स्रुवः | आज्यावदानाद्यर्थम् । |
| जुहूः | होमसाधनम् । |
| उपभृत् | प्रयाजानुयाजाज्यग्रहणार्थम् । |
| ध्रुवा | सर्वयज्ञाद्याज्यग्रहणार्थम् । |
| वेदः | वेदिसंमार्जनाद्यर्थम् । |
| निर्वापपात्री | निर्वापपिष्टसंवपनाद्यर्थम् । |
| आज्यस्थाली | आज्यनिर्वापार्थम् । |
| प्राशित्रहरणम् | प्राशित्रावदानाद्यर्प्थम् |
| इडापात्रम् | इडावदानार्थम् |
| प्रणीताप्रणयनम् | अपां प्रणयनार्थम् |
| योक्त्रम् | पत्न्याः कटिबन्धनार्थम् । |
| मदन्तीपात्रम् | जलतापनार्थम् । |
| मेक्षणम् | पिष्टसंयवनाद्यर्थम् । |
| वेदाग्राणि | पात्रसंमार्गार्थं |
| अन्वाहार्यस्थाली | अन्वाहार्यचरुश्रपणार्थं |
| उपवेषः | अङ्गारनिरूहणार्थम् । |
| पिष्टलेपफलीकरणपात्रम् | पिष्टलेपफलीकरणस्थापनार्थम् । |
| कुम्भीद्वयम् | पयःश्रपणार्थमेका। अन्या च सांयदोह्नार्थम् । |
| दोहनपात्रम् | गोदोहनार्थम् । |
| अभिधानी निदाने च | गोबन्धनार्थमभिधानी । निदाने च गोः पादबन्धनार्थं वत्सबन्धनार्थं च |
| पिधानपात्रम् | दधिकुम्भ्यपिधानार्थम् । |
| यजमानभागपयः पात्रम् | याजमानशृतावदानार्थम् । |
| यजमानभागदधिपात्रम् | याजमानदध्यवदानार्थम् । |
| अग्नीद्भागापात्रम् | तद्भागस्थापनार्थम् । |
| परिश्रयणम् | देवपत्नीयागसमये गार्हपत्य प्रच्छादनार्थं। |
| संदशत्रयम् | अङ्गारग्रहणार्थम् । |
| कस्तम्भी | शकटस्थापनार्थम् । |
| शकटः | व्रीह्यादिस्थापनार्थम् । |

| **संभारनाम** | **प्रयोजनम्** |
|---|---|
| व्रीहयः | पुरोडाशार्थम् । |
| तण्डुलाः | अन्वाहार्यचर्वर्थम् । |
| आज्यम् | होमार्थम् । |
| इध्मप्रव्रश्चनानि | दक्षिणग्नावभ्याधानार्थम् । |
| पिण्डपितृयज्ञपाणी | पिण्डपितृयज्ञियहविर्निर्वापार्थम् । |
| शिक्यम् | सायंदोहकुम्भीस्थापनार्थम् । |
| अरणीद्वयम् | (उत्तरारणी, अधरारणी) अग्निसंपादनार्थम् । |
| मन्थोपमन्थौ | मन्थनार्थम् । |
| चत्वारा ऋत्विजः । | होता, ब्रह्मा, अध्वर्युः अग्नीत् । |

येन चान्येनार्थी भवति तदपि संग्राह्यमिति यावत् ।

---

अथबौधायनीय

# दर्शपौर्णमासप्रयोगप्रारंभः - २

श्रीगणेशाय नमः श्रीसरस्वत्यै नमः ॐ उक्तान्वाधानदिने प्रातरग्निहोत्रं हुत्वा केशश्मश्रुलोमनखानि-वापयित्त्वासपत्नीकः स्नात्त्वा कृतनवनीताभ्यंजनः कृतांजनश्चैकविंशतिदर्भपिंजूलैः पवनं कुर्यात् ॥ पत्नी ऋत्विजश्च पवनमंत्राचमनमंत्रप्रोक्षणानि कुर्युः ॥ **सप्तभिर्मुखं संमृजीत** ॥ **सप्तभिर्नाभि संमृजीत**॥ **सप्तभिर्गुल्फौ** ॥ पिंजूलानि प्रोक्ष्य ॥ उदंङ्निरस्य ॥ अप उपस्पृश्य ॥ मंत्राचमनं कुर्यात्॥ **आपोहिष्ठामयोभुवस्तानऊर्जेदधातन** ॥ **महेरणायचक्षसे** ॥ प्रथमं प्राश्य ॥ **योवःशिवतमोर-सस्तस्यभाजयतेहनः** ॥ **उशतीरिवमातरः** ॥ द्वितीयं ॥ **तस्माअरंगमामवोयस्यक्षयायजिन्वथ**॥ **आपोजनयथाचनः** ॥ तृतीयं ॥ व्याहृतिभिर्मुखं संमृजीत ॥ **भूः दक्षिणतः** ॥ **भुवःउत्तरतः** ॥ **सुवः अलोमकावोष्ठौ** ॥ ततोमार्जनं ॥ **दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः** | **सुरभिनोमुखाकरत्प्रणआयूंꣳषितारिषत्** ॥ **आपोहिष्ठा० महेरणा० योवःशिव० उशती० तस्माअर० आपोजन० यच्चिध्दितेविशो० मिनीमसि० यत्किंचेदंवरुणदेव्येजनेभिद्रोहंमनुष्यश्चरामसि अचित्तियत्तवधर्मायुयोपिममानस्तस्मादेनसोदेवरीरिषः** ॥ **कितवासोयद्रिरिपुर्नदीवि-यद्वाघासत्यमुतयन्नविद्म** ॥ **सर्वाताविष्यशिथिरेवदेवाधातेस्यामवरुणप्रियासः** | **हिरण्यवर्णाः शुचयःपावकायासुजातः कश्यपोयास्विंद्रः** ॥ **अग्निंयागर्भंदधिरेविरूपास्तानआपः शंꣳस्योनाभवंतु** ॥ **यासांꣳराजावरुणोयातिमध्येसत्त्यानृते अवपश्यं जनानां** ॥ **मधुश्चुतःशुचयोयाः पावकास्तान० यामां देवादिविकृण्वतिभक्षं याअंतरिक्षेवहुधाभवंति**॥ **याः पृथिवीपयसोंदंतिशुक्रास्तान० शिवेनमाचक्षुषापश्यतापःशिवयातन्वोपस्पृशतत्त्वचंमे**॥ **सर्वांꣳअग्नींꣳरप्सुपदोहुवेवामयिवर्चोवलमोजोनिधत्त** ॥ **पवमानःसुवर्जनः** ॥ **पवित्रेणविचर्षणिः**॥ **यःपोतासपुनातुमा** ॥ **पुनंतुमादेवजनाः** ॥ **पुनंतुमनवोधिया** ॥ **पुनंतुविश्वआयवः** ॥ **जातवेदः पवित्रवत्** ॥ **पवित्रेणपुनाहिमा** ॥ **शुक्रेणदेवदीद्यत्** ॥ **अग्नेक्रत्त्वाक्रतूंꣳरनु** ॥ **यत्तेपवित्रमर्चषि**॥ **अग्नेविततमतरा** ॥ **व्रह्मतेनपुनीमहे** ॥ **उभाभ्यांदेवसवितः** ॥ **पवित्रेणसवेनच** ॥ **इदंव्रह्मपुनीमहे**॥ **वैश्वदेवीपुनतीदेव्यागात्** ॥ **यस्यैवह्वीस्तनुवोवीतपृष्ठाः** ॥ **तयामदंतः सधमाद्येषु**॥ **वयंꣳस्यामपतयोरयीणां** ॥ **वैश्वानरोरश्मिभिर्मापुनातु**॥ **वातः प्राणेनेपिरोमयोभूः**॥

द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिः सवितस्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैः पुनीहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्येनब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिः संभृतंꣳरसं ॥ सर्वꣳसपूतमश्नाति ॥ स्वदितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिः संभृतंꣳसं॥ तस्मैसरस्वतीदुहे ॥ क्षीरंꣳसर्पिर्मधुदकम् ॥ पावमानीः स्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः॥ ऋषिभिः संभृतोरसः ॥ ब्राह्मणेश्वमृतꣳहितं ॥ पावमानीर्दिशंतुनः ॥ इमंलोकमथोअमुं ॥ कामात्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीस्वस्त्ययनीः ॥ सुदुघाहिघृतश्चुतः॥ ऋषिभिः संभृतोरसः॥ ब्राह्मणेष्वमृतꣳहितम् ॥ येनदेवाः पवित्रेण ॥ आत्मानंपुनतेसदा॥ तेनसहस्रधारेण ॥ पावमान्यः पुनंतुमा ॥ प्राजापत्यंपवित्रम् ॥ शतोद्यामꣳहिरण्मयम् ॥ तेनब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इन्द्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या॥ यमोराजाप्रमृणाभिः पुनातुमा । जातवेदा मूर्जयंत्यापुनातु ॥ भूर्भुवःसुवः ॥ कयानश्चित्र० कयाशचि० कस्त्वासत्यो० दृढा चिदारु० अभीषुण० शतंभवा० तरत्समंदीधा० तरत्सम० उस्रावेदवसू० तर० ध्वस्रयोः पु० तरत्सम० आययोस्त्रि० तरत्समंदी० भूर्भुवःसुवः ॥

इति प्रतिमंत्रं मार्जयित्त्वा वेद्युत्करयोर्मध्येन प्रपद्य पश्चाद्गार्हपत्यस्य-दर्भेष्वासीनो दर्भान्धारयमाणः पवित्रपाणिः पत्न्यासहप्राणानायम्य विष्णुंस्मृत्त्वा जपति ॥ ॐ पुरुष एवेदꣳ सर्वं । यद्भूतं यच्चभव्यं। उतामृतत्वस्ये नः । यदन्नेनातिरोहति ॥ याः पुरस्तात्प्रस्रवंतिरुपरिष्टात्सर्वतश्चयाः॥ ताभीरश्मिपवित्राभिः श्रद्धांयज्ञमारभे ॥ देवागातुविदोगातुंयज्ञायविंदत ॥ मनसस्पतिनादेवेन। वाताद्यज्ञः प्रयुज्यतां ॥ श्रद्धए३हि ॥ सत्येनत्त्वाह्वयामि ॥ आकूत्त्यैत्त्वाकामायत्त्वासमृधेत्त्वा। पुरो दधे ॥ अमृतत्त्वायजीवसे ॥ आकूतिमस्यावसे । काममस्यसमृध्यै ॥ इंद्रस्ययुंजतेधियः॥ आकूतिंदेवींमनसः पुरोदधे ॥ यज्ञस्यमातासुहवामेअस्तु ॥ यदिच्छामिमनसासकामः ॥ विदेयमेनधृदयेनिविष्टं ॥ उपांशु ॥ श्रीपरमेश्वरप्रीत्त्यर्थं स्वर्गकामः पौर्णमासेन हविषा यक्ष्ये॥ त्रिः ॥ त्रिरुच्चैः ॥ अमावास्यायां ॥ अमावास्येन हविषायक्ष्ये ॥ त्रिरुपांशु त्रिरुच्चैः ॥ तन्मंऋध्यतांतन्मेसमृध्यतांतन्मेसंपद्यतांकामः इति यजमानः॥ अथऋत्त्विज्ञः॥ तत्तंऋध्यतांतत्तेस०॥

यजमानः - ॐ **तथा || पौर्णमासं॑हविः || व्रीहिमयः पुरोडाशोद्रव्यं || आज्यं च ||**
अग्नीषोमावाज्यभागदेवते || **अग्निः || विष्णुः || अग्नीषोमौ || इंद्रोवैमृधश्च प्रधानदेवताः||**
**पंच प्रयाजाः || त्रयोनुयाजाः || अष्टौ पत्नीसंयाजाः** / सप्तपत्नीसंयाजाः/ चत्त्वारःपत्नीसंयाजाः||
**अग्निस्विष्टकृत्त्सूक्तवाकशंयुवाकौ** इत्यादयोंगदेवताः || **एवमात्मकेनसांगोपांगेनकर्मणा श्वो यक्ष्ये||** दर्शेतु|| **अमावास्यं॑हविः || व्रीहिमयः पुरोडाशो द्रव्यं || आज्यं च ||**
**अग्नीषोमावाज्यभागदेवते|| अग्निः || विष्णुः || इंद्राग्नी इतिप्रधानदेवताः पंचप्रयाजा**इत्यादि
श्वोयक्ष्यइत्त्यंतंसमानं || अस्मिन्कर्मण्यध्वर्युंत्त्वामहंवृणे || अध्वर्युः **वृतोस्मि || कर्म करिष्यामि ||**
आचम्य वेद्युत्कर्‍योर्मध्येन प्रपद्य गार्हपत्त्यस्योत्तरत उपविश्य जपति || **इडादेवहूर्मनुर्यज्ञनीर्वृहस्पति-रुक्थामदानिश॑- सिषद्विश्वेदेवाः सूक्तवाचः पृथिवीमातर्मामा हिं॑सीर्मधुमनिष्येमधुजनिष्ये-मधुवक्ष्यामिमधुवदिष्यामिमधुमतींदेवेभ्योवाचमुद्यास॑शुश्रूषेण्यांमनुष्येभ्यः स्तंमादेवा-अवंतुशोभायै-पितरोनुमदंतु** || देवागातुविदो० प्रयुज्यतां || अध्वर्युर्यजमानो वा ग्नीनन्वादधाति||
स्थूलास्तिस्रः समिधोभ्यादधाति || गार्हपत्त्यस्य पश्चात् ब्राह्मासनेनोपविश्य || ॐ **ममाग्नेवर्चो-विहवेष्वस्तुवयंत्त्वेधानास्तनुवंपुषेम || मह्यंनमंतांप्रदिशश्चतस्रस्त्वयाध्यक्षेणपृतनाजयेम ||**
इति प्रथमं || **मनदेवाविहवेसंतुसर्व-इंद्रावंतोमरुतोविष्णुरग्निः || ममांतरिक्षमुरुगोपमस्तु मह्यंवातः पवतांकामेअस्मिन्** || द्वितीयं|| **मयिदेवाद्रविणमायजंतांमय्याशीरस्तुमयिदेवहूतिः|| दैव्याहोतारावनिपंतपूर्वेरिष्टास्या-मतनुवासुवीराः** ||इति तृतीयं|| एवं दक्षिणाग्ना ऊर्ध्वज्ञुरुपविश्य
तिस्रः || **मह्यंयजंतुममयानि-हव्याकूतिः सत्त्यामनसोमो अस्तु || एनोमा निगांकतमच्चनाहंविश्वेदेवासोअधिवोचतामे||** इति प्रथमम् । **देवीः षडुर्वीरुरुणः कृणोतविश्वे देवासइहवीरयध्वं|| माहास्महिप्रजयामातनूभिर्मा-रधामद्विषतेसोमराजन्** । इति द्वितीयम्||
**अग्निर्मन्युंप्रतिनुदन्पुरस्तादब्धोगोपाः परिपाहिनस्त्वं|| प्रत्यंचोयंतुनिगुतः पुनस्तेमैषांचित्तं-प्रवुधांविनेशत्** इति तृतीयम् || अपरेण गार्हपत्त्यमाहवनीयमेत्य प्रत्यगुदकप्रह्वस्तिष्ठन् पूर्ववत्तिस्रः||
**धाताधातृणांभुवनस्ययस्पतिर्देव॑-सवितारमभिमातिषाहम् || इमंयज्ञमश्विनोभावृहस्पतिर्देवाः पांतुयजमानंन्यर्थात्** इति प्रथमम्|| **उरुव्यचानोमहिषशर्मय॑ सदस्मिन्हवेपुरुहूतः पुरुक्षु || सनः प्रजायैहर्यश्वमृडयेंद्रमानोरीरिषोमापरादाः** इति द्वितीयम् **येनः सपत्नाअपतेभवं**

1) मन्त्रयतन्त्‌ - इन्द्रो वा मन्द्रोवा ध्वर्युवशाज्जेयः ।

**त्विंद्राग्निभ्यामववाधामहेतान्।। वसवोरुद्राआदित्याउपरिस्पृशंमोग्रंचेत्तारमधिराजमक्रन्** इति तृतीयं ॥ समिध आधाय किंचित्पुरस्तात्तिष्ठन् नाहवनीयमुपतिष्ठते ॥ **अर्वाचमिंद्रममुतोहवा-महेयोगोजिध्दनजिदश्वजिद्यः ॥ इमंन्नोयज्ञं विहवेजुषस्वास्य कुर्मोहरि-वोमेदिनंत्त्वा ॥** गार्हपत्त्यादीन्परिसमुह्य पर्युक्ष्याग्नीनलंकुर्वते-ध्वर्युर्यजमानः पत्नी च ॥ यजमानस्तीर्थेन निर्गत्याग्रेणाहवनीयं परीत्य स्वायतन उपविशति ॥ तिरः पवित्रमप आचामयति ॥ **पयस्वतीरोपधयः पयस्वद्वीरुधांपयः ॥ अपांपयसोयत्पयस्तेन-मामिंद्रसꣳसृज ॥** द्विस्तूर्णीं ॥ शेपं समाप्य आहवनीयं परिपिच्य समिध आदधाति ॥ **अग्नेव्रतपतेव्रतंचरिष्यामितच्छेकेयंतन्मेराध्यतांꣳस्वाहा** ॥ **अग्नये व्रतपतय इद० वायोव्रतपते व्रतंचरिष्यामि तच्छेकेयं तन्मेराध्यतांꣳस्वाहा ॥ वायवे व्रतपतय इदं न मम ॥आदित्यव्रत व्रतपतेवृत० । अदित्यव्रतय इदं० व्रतानांवृतपतेव्रतंचरि० व्रतानांव्रतपतय** इदं० आहवनीयंपुनः परिषिंचति ॥ व्रतोपेतस्य पर्ण शाखामाच्छैति सन्नयतः यजमानस्य । प्राङोदङ्। वाचंयमः । यत्र वा वेत्स्यन्मन्यते । सा या प्राची वोदीची वा बहुपर्णा वहु शाखाप्रतिशुष्काग्रा भवति तंमाच्छिनत्ति **इषेत्वोर्जेत्वेति** तथा वत्सानपाकरेति **वायवस्थो पायवस्थेति** अथैषां मातृः प्रेरयति **देवोवः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्ययध्वमघ्निया देवभागमूर्जस्वतीः पयस्वततीः प्रजावतीरनमीवा अयक्ष्मा मानस्तोन ईषत माघशँसोरुद्रस्य हेतिः परिवो वृणक्त्विति** ध्रुवा अस्मिन् गोपतौ स्यात् वह्वीरिति । अथैतां शाखामग्रेणाहवनीयं पर्याहृत्य पूर्वया द्वाग प्रपद्य जघनेन गार्हपत्यमग्निठेऽनस्युत्तरार्धे वाग्न्यागारस्योप गूहति यजमानस्य पशन् पाहीति । यजमानमीक्षते। अध्वर्युर्जघनेन गार्हपत्त्यं त्तिष्ठन्नसिदमादत्ते ॥ **देवस्यत्त्वासवितुः प्रसवेऽश्विनोर्वाहुभ्यां पूष्णोहस्ताभ्यामददे** ॥ अभिमंत्रयते ॥ **यज्ञस्यघोपदसि**॥ गार्हपत्यं प्रतितपति ॥ **प्रत्युष्टꣳरक्षः प्रत्युष्टाअरातयः** ॥ आहवनीयदेशं गच्छति ॥ **प्रेयमगा द्धिपर्णावर्हिरच्छमनुनाकृताः स्वधयाविनष्टातआवहंतिकवयः पुरस्ताद्देवेभ्योजुष्टं** ॥ वेदिमवेक्षते॥ **इहवर्हिरासदे**॥ दर्भदेशंगत्त्वा प्रस्तरपर्याप्तं दर्भमुष्टिं परिगृह्णाति ॥ **देवानांपरिपूतमसि** ॥ असिदेनोर्ध्वमुन्मार्ष्टि ॥ **वर्षवृद्धमसि** ॥ असिदं छेदनदेशे निदधाति ॥ **देववर्हिर्मात्त्वान्वङ्मातिर्यक् पर्वतेराध्यासं** ॥ आच्छिनत्ति ॥ **आच्छेत्तातेमारिषं** ॥ अप उपस्पृश्य ॥ छेदनमभिमृशति ॥ **देववर्हिः शतवल्शंविरोह** ॥

आत्मानमभिमृशति || **सहस्रवल्शाविवयꣳरुहेम** || अप उपस्पृश्य || सर्वाछित्वा प्रस्तरंचिन्हितंकृत्त्वा निदधाति || **पृथिव्याःसंपृचः पाहि** || अतऊर्ध्वं तूष्णीं त्रीन्पंच सप्त नवैकादश वा लुनाति || यावता पर्याप्तं मन्यते || ततः संधित्रययुक्तं प्रदक्षिणमावेष्टितं द्विगुणंकृत्त्वा प्रदक्षिणवेष्टितं शुल्बं करोति || तदुदगग्रं निदधाति || **अदित्यैरास्नासि** || शुल्बे दर्भमुष्टीं निधायोपरि प्रस्तरं संभरति || **सुसंभृतात्त्वा-संभरामि** || सनह्यति || **इंद्राण्यैसंनहनं** || ग्रंथिं करोति || **पूषातेग्रंथिंग्रथ्नातु** || **पश्चात्प्रागग्रमपगूहति** || **सतेमास्थात्** || उद्यच्छति || **इंद्रस्यत्वाबाहुभ्यामुद्यच्छे** || तूष्णीं शीर्ष्णा तृणं निधाय-वर्हिर्निदधाति || **बृहस्पतेर्मूर्ध्नाहरामि** || गार्हपत्यमेति|| **उर्वंतरिक्षमन्विहि**|| उत्तरेण गार्हपत्यमनधः सादयति || **देवंगममसि** || गुप्तं सा दयति || तूष्णीं परिभोजनीयादीनि लुनाति || दर्शे सकृदाच्छिनं च || तथैव शुल्वं कृत्त्वा एकविंशतिदारुकमिध्मं बध्नाति || **यकृण्णोरुपंकृत्त्वाप्राविशस्त्वंवनस्पतीन्** || **ततस्त्वामेकविꣳशतिधासंभरामिसुसंभृता** || **वेदं करोति**|| दर्भमुष्टिमावेष्ट्य द्विगुणं वृत्त्वाग्रभागेप्रादेशानंतरं बध्वाग्राणिच्छिनत्ति **स वेदः** || दर्शे वेदं कृत्त्वा वेदिं करोति || प्रागुत्तरात्परिग्रहात् || वेदमादत्ते|| **अयंवेदः पृथिवीमन्वविंदद्गुहासतीं-गहनेगह्वरेषु** || **सविदतुयजमानायलोकमंच्छिद्रंयज्ञंभूरिकर्माकरोतु** || वेदेन वेदिमुदगपवर्गं प्रागवसानं त्रिःसंमार्ष्टि || **वेदेनवेदिंविविदुः पृथिवीꣳसाप प्रथेपृथिविपार्थिवानि** || **गर्भंविभर्ति-भुवनेष्वंतः स्ततोयज्ञोजायतेविश्वदानिः**|| द्विस्तूष्णीं || वेदं निधाय वेद्याः पश्चात्तिष्ठान् दर्भाभ्याꣳसह स्फ्यमादत्ते || **देवस्वंत्त्वासवितु० माददे** || अभिमंत्रयते || **इंद्रस्यवाहुरसिदक्षिणः सहस्रभृष्टिः शततेजाः** || दर्भेण स्यं निमार्ष्टि || **वायुरसितिग्मतेजाः शतभृष्टिरसिवानस्पत्त्योद्विषतोवधः**|| शिष्टं दर्भं वेदिपूर्वतृतीयभागे उदगग्रं निदधाति || **पृथिव्यैवर्मासि वर्मयजमानायभव** || दर्भमूले स्फेन सꣳहंति || **पृथिविदेवयजन्योपध्यास्तेमूलंमाहिꣳसिषं** || अप उपस्पृश्य || मृदासह स्यमादत्ते|| **अपहतोररुः पृथिव्यै** || हरति || **व्रजंगच्छगोस्थानं** || वेदिमवेक्षते || **वर्षतुतेद्यौः** || मृदमुत्करे निवपति || **वधानदेवः सवितः परमस्यांपरावतिशतेनपाशैर्योस्मांद्वेष्टि यंचवयंद्विष्मस्तमतोमामौक्**|| आग्नीध्र उरत्करदे शउपविश्य पाणिभ्यां मृदं गृह्णाति || पुनस्स्येन प्रहरति || **पृथिवि० स्तेमू०**

2) पिण्डपितृयज्ञार्थम् ।।

**अप० मृदा० दत्ते** || **अपहतोररुः पृथिव्यैदेवयजन्यै** || हरति || **व्रजंगछगोस्थानं** || वेदिमवेक्षते|| **वर्षतुतेद्यौः** || मृदमुत्करे निवपति || **बधानदेवसवित०** पुनस्फेन प्रहरति || **पृथिविदे०** अपउ० मृदासह० **अपहतोररुःपृथिव्याअदेवयजनः** || हरति | **व्रजंग०वेदिम०वर्षतु०** मृदमुत्करे० **वधानदेव० मामौगररुस्तेदिवंमास्कान्** || तूष्णीं चतुर्थं स्फ्य-प्रहरणादि मृन्निवपनांतं सहवर्हिपा|| वेदेः पूर्व परिग्राहं परिगृह्णति || दक्षिणांसमारभ्य दक्षिणाश्रोणिपर्यंतं स्फ्येनलेखामालिखति || **वसवस्त्वापरिगृह्णतुगायत्रेणछंदसा** || दक्षिणश्रोणिमारभ्योत्तरश्रोणेः|| **रुद्रास्त्वापरिगृह्णंतु-त्रैष्टभेनछंदसा** || अप० उत्तरश्रोणेरुतरांसपर्यंतं **आदित्त्यास्त्वापरिगृह्णंतु जागतेन छंदसा**|| करणं जपति || **इमांनराः कृणुत वेदिमेत्यवसुमंतीः रुद्रवतीमादित्यवंतीवंर्ष्मदिवोना-भापृथिव्यायथायं यजमानोनरिष्येत्** || वेदिं प्राचीं त्रिरुद्धंति || **देवस्यसवितुः सर्वेकर्मकृण्वंति वेधसः** || प्रेष्यति|| **अग्नीदितस्त्रिर्हर** || आग्नीध्र उद्धृतदेशात्रिर्मृदमुधृत्योत्करे निवपति || **ततः पिंडपितृयज्ञः** || आश्लायानाऽऽपस्तम्बीय-बैधायनीयैरपि स्वसूत्रानुसारम्। ततो भोजनममाषममाः समाज्येनाश्नीयातां तदभावे दध्ना पयसा वा । तिलवर्जं, सर्वं कौषीधान्यवर्ज्यं च । सायमग्नि होत्रं हुत्वा अथैतस्यै शाखयै पर्णानिप्रच्छद्याग्रेण गार्हपत्यं निवपत्यथैनामधस्तात्परिवास्य जघनेन गार्हपत्यं स्थविमदुपवेशाय निदधाति अथास्याप्रादेशामात्रं प्रमाय दर्भनाडीः प्रवेश्य त्रिवृच्छाखा पवित्रं करोति **त्रिवृत्पलाशे दर्भ इयान् प्रादेशसंमितः यज्ञं पवित्रं पोत्रृतमं पयोहव्यं करोतु मे ।** उत्तरेणगार्हपत्यं तृणानि सँस्तीर्य । तेषु चतुष्टयः सादयति दोहनं पवित्रं सान्नाय्य तपन्यौ स्थाल्यौ इत्यैतानि । आद्भिःप्रोक्षति **शुंधध्वं दैव्याय कर्मणेदेवयज्यायै** इति त्रिः । अथ जघनेन गार्हपत्योस्योपविष्य उपवेपेणोदीचीङारान्निरुहति **मातारिश्वनो घर्मोसीति ।**

अध्वर्युः- **कामधुक्षः ।**

दोग्धा- **गङ्गाम्**, इति निर्दिशति ।।

अध्वर्युः- **सा विश्वायुः**, इति कुम्भ्यां तिरः पवित्र पय आदायाऽऽसिञ्चति
**कामधुक्षः ।** इति दोग्धारं द्वितीयमायंतं पृच्छेत् ।

---

3) अपराण्हेस्व मूत्रोक्त विधातेन कार्यम् ।

दोग्धा- **यमुनाम्**, इति निर्दिशति ।

अध्वर्युः- **सा विश्वव्यचाः ।** इति कुम्भ्यां पूर्वतदासिंचति ।
**कामधुक्षः ।** इति तृतीयमायन्तं पृच्छेत् ।

दोग्धा- **सरस्वतीम्**, इति

अध्वर्युः- **सा विश्वकर्मा**, इति पूर्ववदासिंचति ।। तिसृषु दुगधासु वाचं विसृजते ।। **वहु दुग्धि इन्द्राय / महेन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः । वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पताम् ।** तूष्णीमुत्तरा दोहयित्वा कुम्भ्यामासिंचति । दोहनेऽप आनीय संक्षालनमानयति **संपृज्यध्वमृतावरी रूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये** इति अथैनमुत्तप्तं कृत्वा वर्त्म कुर्वन् उदगुद्वास्य **सोमेन त्वाऽऽतनच्मि महेन्द्राय दधि इन्द्रायेति वा।** इति शीतबुध्नं दध्ना आतनक्ति तिरः पवित्रम् **यज्ञस्य संततिरसि यज्ञस्य त्वा संततिमनु संतनोमि।** इत्यग्निहोत्रोच्छेषणमभ्यातनक्ति काँसेन चमसेनवा अपिदधाति।। परिवासनशकलमन्ववधाय **अदस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम्। अद्भिररिक्तेन पात्रेण याः पूताः परिशेरते ।** इति तेनापिदध्यात् । यदि मृन्मयेनापिदध्यात्तृणं काष्ठं वाऽपिधाने क्षिप्त्वा **विष्णो हव्यꣳ रक्षस्व**, इति कुम्भीमनधो निदधाति ।। यत्रगुप्तंमन्यते ।। अथैतास्मिन् काले दर्भैः प्रातदोहाय वत्सानपाकरोति तूष्णीम् ।

## इत्यन्वाधानदिनकृत्यम् ।

अध्वर्युः- कृते प्रतरग्निहोत्रे आहवनीयस्योत्तरतस्तिष्ठन् हस्तौसमृशति **कर्मणे वां देवेभ्यः शकेयम्।** अपउपस्पृश्य गार्हपत्यात्प्रक्रम्य परिभोजनीयदर्भैराऽऽहवनीयं परिस्तृणाति पुरस्तात् उदगग्रैः-दक्षिणतः प्रागग्रैः । पश्चादुदगग्रैः । उत्तरतः प्रागग्रैः । एवं दक्षिणाग्निम्। एवं गार्हपत्यम् । पत्नीहोतृब्रह्मयजमानप्रणीताग्नीधां स्थाने दर्भैरासनानि कल्पयति।। गार्हपत्यादाहवनीयं दर्भानाꣳस्तीर्य तेषु द्वंद्वंन्यंचि यज्ञपात्राणि युनक्ति **स्फयं कपालानि चाग्निहोत्रहवणीं शूर्पं कृष्णाजिनं शम्यां उलूखलं मुसलं दृषच्चोपलां । जुहूमुपभृतं स्रुवं ध्रुवां प्राशित्रहरणमिडापात्रं मेक्षणं पिष्टोद्वपंनीं प्रणीताप्रणयनमाज्यस्थालीं वेदं दारुपांत्रीं योक्त्रं वेदपरिवासनं धृष्टिमिध्म-प्रव्रश्चनमन्वाहार्यस्थालीं मदंतीं च । अन्यानि च यान्युपयुक्तानि तान्येवमेव सादयेत् ।।**

**याजमानः -** आस्मिन्कर्मणि **ब्रह्माणं त्वामहं वृणे** इति ब्रह्माणं वृणीते ।

**आश्वलायनब्रह्मा-** प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीत्याचम्य दक्षिणावृद्विहारं प्रविश्य समस्तपाण्यङ्गुष्ठो भूत्वाऽग्रेणाऽऽहवनीयं परीत्य दक्षिणत आहवनीयस्योदङ्मुखः स्थित्त्वा **निरस्तः परावसुः ।** इति स्वायतनादङ्गुष्ठोपकनिष्ठिकाभ्यां दर्भं नैॠत्यां निरस्याप उपस्पृश्य **इदमहमर्वावसोः सदने सीदामि ।** इत्युपविश्य **वृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते वृहस्पते यज्ञं गोपाय,** इति जपेत् ।

**बौधायनियब्रह्मा-** यज्ञोपवीत्यप आचम्याग्रेणाहवनीयं परीत्य दक्षिणत उदङ्मुखस्तिष्ठन्ब्रह्मसदनमुपतिष्ठते **नमो ब्रह्मणे नमो ब्रह्मसदनायेत्य**थासनात्तृणं निरस्य अहेदैधिषव्योदतस्तिष्ठान्यस्य सदने सीद यो ऽस्मत्पाकतर इत्युपविशति **उन्निवत उदुद्वतश्च गेषमिति ।** अथेमे समीक्षते **पातं मा द्यावापृथिवी अद्याह्नः** इत्युपविश्य जपति **भूर्भुवः सुवः क इदं ब्रह्मा भविष्यति स इदं ब्रह्मा भविशष्यति प्राणः प्रजापतियुक्तोऽहं युज्ये ब्रह्माणावव वाजी सुधुर इव वह्निर्वलीवर्द इव युक्तो हव्यं वक्ष्याम्यहं देवताभ्यो भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूभुवसुवः प्रपद्ये वायुं प्रपद्ये ब्रह्म प्रपद्ये क्षत्रं प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं प्रपद्ये सुवः प्रयद्ये भूर्भुवसुवः प्रपद्येवायुं प्रपद्ये ब्रह्म प्रपद्ये क्षत्रं प्रपद्ये ऽनार्तो देवतां वाचं पप्रद्य ॐ प्रपद्य इति।**

तं यजमानो ब्रह्माणं वृणीते **भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे वीतहव्ये पुरोहितं येनायन्नुत्तमः सुवर्देवा अङ्गिरसो दिवमिति ।** वृतो ब्रह्मा जपति **अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि ब्रहाणं मा वृथा वीत हव्येपुरोहितंयेनाय न्नुत्तमं सुर्वदेवा अङ्गिरसोदिवम् देव सवितरेतं त्वा वृणते वृहस्पतिं दैव्यं ब्रह्माणं तदहं मनसे प्रव्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे ऽनुष्टुप्पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वेदेवा वृहस्पतये वृहस्पतिर्ब्रह्मणे ब्रह्म भूर्भुवःसुवर्वृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणां वृहस्पते यज्ञं गोपाय ।**

**यजमानः-** तूष्णीं निरसनं कृत्वा स्वासन उपविशेत् ।

अध्वर्युः- पृष्ट्याऽस्तृणाति संततं गार्हपत्यादाहवनीयत् **यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्य ।** परिजोज्ञनीयेभ्योद्वौदर्भौ प्रादेशमात्रौ साग्रावनखाछिन्नौ भूमौ निधायाधत्ते ।। **इमौप्राणापानौयज्ञस्यांगानिसर्वषः आप्याययंतौ-संचरतांपवित्रेहव्येशोधने ।** ते पवित्रेअद्भिरनुमार्ष्टि । **पवित्रेस्थोवैष्णवीस्थोयज्ञियेस्थो वायुपूतेस्थोविष्णोर्मनसापूतेस्थोयज्ञस्यपवनेस्थः ।।** उत्तरेणगार्हपत्यमुपविष्य कंसं वा चमसं वा प्रणीताप्रणमनं याचति तस्मिंस्तिरः पवित्रमपानयंन्नाह । **ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छ ।** इति संप्रैषं कुर्यात्।

आश्वलायनब्रह्मा- **भूर्भुवः स्वर्बृहस्पति प्रसूतः ।** इति जपित्वा **ओ३म् प्रणय,** इत्यतिसृजेत्।

बौधायनियब्रह्मा- **देव सवितः प्रणय यज्ञं देवता वर्धयैता नाकस्य पृष्ठे सुवर्गे लोके यजमानो अस्तु । सप्तर्षीणाऽ सुकृतां यत्र लोकास्तत्रेमं यज्ञं यजमानं च धेहि।** इत्युपांशु जपमुक्त्वा-**ओ३म् प्रणय,** इत्युच्चैरभ्यनुजानीयात् ।

अध्वर्युः - चमसे अपः पूरयित्वा नासिका समं धृत्वाउत्तरेणाऽऽहवनीय दर्भेषु सादति **अनयापः प्रणयानि** इति दर्भैरभिच्छाद्य । सपवित्रेण पाणिना प्रदक्षिणं प्रत्यंङ्गाद्रुत्य दक्षिणेनाग्निहोत्रहवर्णींसव्येनशूर्पमादत्ते । **वेषाय त्वा गार्हपत्येप्रतितपति । प्रत्युष्टऽ रक्षः प्रत्युष्टा अरातयः** द्विस्तूष्णीं अथ जघनेन गार्हपत्यमग्निष्ठ मनो भवति । तस्योत्तरां धुर मभिमृशति । **धूरसि धूर्व धूर्वन्तं धूर्व तं योस्मा धूर्वति तं धूर्व यं वयं धूर्वाम** इत्यनोऽभि मन्त्रयते ।। **त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतम महुतमसि हविर्धानं दृऽहस्व माह्वारिति ।।** अथ **विष्णो क्रमोसि** इति दक्षिणपक्षपालिं क्रमित्वा अभ्यारुह्य प्रउगे शूर्प निधधाति । शूर्पे सृचं स्रुचि पवित्रे ।। अथ पुरोडाशीयान् प्रेक्षते **मित्रस्यत्वा चक्षुपा प्रेक्षे माभेर्मा संविक्था मात्वाहिऽ सिपम् । उरुवाताय** इति तृणं वा किंपारु वा निरस्याप उपस्पृश्य दशाहोतारं व्याख्याय हविनिर्वप्स्या३मि इति यजमान मामन्त्र्य पवित्रवत्या अग्निहोत्र हवण्या निर्वपति।। यद्यु वे नानो भवति । जघनेनगार्हपत्यमुदगग्रं स्यां निधाय स्योपरिपात्रं पात्र्यां पुराडाशीयानोप्य-शर्पेग्निहोत्रहवर्णीं तस्यां पवित्रं निधायास्त्रुग्घस्त एव पात्र्याः पूर्वार्धमभिमृशति । **धूरसि धूर्व धूर्वन्तं धूर्व तं**

**योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः धूर्वामस्त्वंदेवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममह्रुतमसि हविर्धानंदृꣳ हस्वमाह्वारिति ।** पुरोडाशीयान्प्रेक्षति । **मित्रस्यत्वा चक्षुषा प्रेक्षे माभेर्मासंवि क्थामात्वाहिꣳशिषं।।** तृणं शूकं वा निरस्यति उरुवातय । अप उप० । दशहोतारं व्याचष्टे । **चित्तिः स्रुक्। चित्तमाज्यम्। वाग्वेदिः । आधीतं वर्हिः । केतो अग्निः । विज्ञातमग्निः। वाक्पतिर्होता । मन उपवक्ता । प्राणो हविः । सामाध्वर्युः। यजमानहविर्निवपस्यामि** इति मजमान मामन्त्रयति ।

यजमानः- ॐ ३ **निर्वप ।**

अध्वर्युः- पवित्रवत्यामाग्निहोत्रहवण्यां मुष्टिमात्रंनिधाय तयाशूर्पेनिर्वपति । **देवस्यत्त्वा० भ्यामग्नये जुष्टं निर्वपामि । एवं त्रिः ।** तूष्णिंचतुर्थं इति **प्रथमम् ।**

यजमानः- **अग्निꣳ होतारमिह तꣳ हुवे देवान्यज्ञियानिह यान्हवामहे । आयन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य ।** इति प्रति देवता निर्वपे जपति।

अध्वर्युः- **देवस्यत्त्वा० हस्ताभ्यामग्नीषोमाभ्यां जुष्टंनिर्वपामि । एवं त्रिः ।** तूष्णिंचतुर्थं। इति द्वितीयम् । **देवस्यत्त्वा० भ्यांमिंद्रायवैमृधायजुष्टंनिर्वपामि । एवं त्रिः ।** तूष्णिंचतुर्थं ।

**असोमयाजिनो दर्शे** - आग्नेय निर्वापानन्तरं **देवस्य त्वा सवितु० हस्ताभ्यामिन्द्राग्निभ्यां जुष्टं निर्वपामि । एवं त्रिः ।** तूष्णिंचतुर्थं इति द्वितीयं निर्वपति असं नयतः ।। **इदं देवानाम् ।** इति निरूप्तानभिमृश्य **इदमु नः सह,** इत्यवशिष्टानभिमृश्य एकीकरोति **स्फात्यै त्वा नारात्यै,** इति आहवनीयमीक्षते **सुवरभिच्यख्यम् । सुवरभिविख्येपम्, वैश्वानरं ज्योतिः,** गृहानन्वीक्षते **दृꣳहन्तां धुर्या द्यावापृथिव्योः।** शूर्पमादायोत्तिष्ठति। **उर्वन्तरिक्षमन्विहि,** उत्तरेणगार्हपत्यं-मादयति **अदित्यास्त्वोपस्थे सादयामि** गार्हपत्यमभिमंत्रयते **अग्ने हव्यꣳ रक्षस्व ।** सशूकायामग्निहोत्रहवण्यां तिरपवित्रमत्याधायाप आनीय **देवो वः सवितोत्पुनातु अच्छिद्रेणपवित्रेण ।**

वसोः सूर्यस्य रश्मिभिः प्रोक्षणीरादायोत्तिष्ठति । आपोदेवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये ताभिरेवाद्भिः त्रिस्ता एव प्रोक्षति । प्रोक्षिताः स्थ इति त्रिः । पुरोडाशीयात्प्रोक्षति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षाम्यग्नी-षोमाभ्यामिंद्रायवैमृधाय । द्विस्तूष्णिं।। दर्शे । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये वो जुष्टं प्रोक्षामींद्राग्निभ्याम् । पात्राण्युत्तानीकृत्य प्रोक्षति । शुंधध्वंदैव्यायकर्मणेदवयज्यायै। द्विस्तूष्णीं । गार्हपत्यस्य पुरस्तात्प्रोक्षणीं निधाय कृष्णाजिनमूर्ध्वग्रीवं आदायापसव्यमावृत्यावधुनोती । अवधूतः रक्षोऽवधूता अरातयः । तत्पश्चाग्रीवमूर्ध्वलोमोपसृणाति । अदित्या-स्त्वगसि प्रति त्वा पृथिवी वेत्तु । तस्मिन्नुलूखलमध्यूहति अनुत्सृजन्नुलूखलम् । अधिषवणमसि वानस्पत्यं प्रति त्वाऽदित्यास्त्वग्वेत्तु । तस्मिन्पुरोडाशीयानावपति। अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि मुसलमवद्धाति । अद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यः सुशमि शमिष्व । हविष्कृदे३हि इति त्रिरुक्त्वा हविष्कृतमाह्वयति । उच्चैः समाहन्तवै, यजमान : अस्मिन्कर्मणि आग्नी ध्रं त्वामहंवृणे । आग्नीध्रः - आचम्य तीर्थेनप्रविश्य गार्हपत्यस्योत्तरत उपविश्य इडादेव० इति अनुवाकं जपित्वा । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । इति शम्यामादाय इषमा वदोर्जमा वद द्युमद्वदत वयः संघातं जयेष्म । इति दृषदुपलेममाहंति । द्विर्दृषदि सकृदुपले समाहंति । एवं त्रिः । तूष्णीं पात्राणि समाहंति ।

अध्वर्युः- पुरोडाशीयान्वितुपान्कृत्वोत्तरतःशूर्पमुपयच्छति वर्षवृद्धमसि, तस्मिन्पुरोडाशीयानुद्वपति। प्रति त्वा वर्षवृद्धं वेत्तु, उदगावृत्त्य परापुनाति । परापूतः रक्षः परापूता अरातयः- सव्यहस्तेन तुषान् वायव्यां दिशि निरस्यति । रक्षसां भागोऽसि, अपउ० वर्षवृद्धाःस्थ व्रीहितण्डुलान्विविनक्ति । वायुर्वो विविनक्तु, पात्र्यां तंडुलान्

प्रस्कंदयति । **देवो वः सविता हिरण्यपाणिः प्रतिगृह्णातु** पृथकृतान् व्रीहीनवहंत्र्यैप्रयछंन्नाह । **त्रिष्फली कर्तवै,** इति पत्नीः संप्रेष्येत **त्रिष्फलीकृतान् मे प्रब्रूतात्** इति ।

**पत्नी-** त्रिवृत्तुषाकृत्वात्रिः **फलीकृता** इत्याह ।

**अध्वर्युः-** तंडुलान्प्रक्षाल्य तदुदकमंतर्वेदिप्राशित्रेण निनयति । **त्रिष्फलीक्रियमाणानां यो न्यङ्गो अवशिष्यते। रक्षसां भागधेयमापस्तत्प्रवहतादितः स्वाहा** इति उत्कर देशे वा स्वाहा वर्ज्यम् ।

**यजमानः- रक्षोभ्य इदं न मम,** उभावपः उपस्पृशतः ।

**यजमानः-** वाचं विसृज्य **कस्त्वा युनक्ति स त्वा युनक्तु** इति यज्ञयोगं युनक्ति

**अध्वर्युः-** तथैवकृष्णाजिनमवधुनोति।। **अवधूतः०अरातयः।** तथैव स्तृणाति। **अदित्यास्त्वगसि० वेत्तु।** तदुपर्युत्तरतस्थूलप्रदेशामुदीचीनां शम्यां निदधाति । **दिवस्कम्भनिरसि प्रतित्वादित्यास्त्वग्वेत्तु** इति । तस्यां प्रागायतां दृषदं निदधाति । **धिषणाऽसि पर्वत्या प्रति त्वा दिवस्कंभ्मनिर्वेत्तु ।** दृषद्युपलां तिरश्चींःसादयति। **धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्तु ।** तस्यां पुरोडाशीयानधिवपति । **देवस्य० मग्नयेजुष्टमधिव-पाम्यग्नीषोमाभ्यामिंद्रायवैमृधाय।** दर्शे। **देवस्य० मग्नयेजुष्टमधिवपामींद्राग्निभ्यां।** अभिमृश्य जपति । **धान्यमसि धिनुहि देवान् धिनुहियज्ञं धिनुहियज्ञपतिं धिनुहिमां यज्ञनयं ।** पिनष्टि । **प्राणाय त्वा,** इति प्रोचीमुपलां (प्रापय्य) **अपानाय त्वा,** इति प्रतीचीमुपलां प्रोहत्य **व्यानाय त्वा,** तिरश्चीं कर्षति । व्यानायत्वा इति स्वबाहू स्कन्दन्वीक्षते । **दीर्घामनु प्रसितिमायुषेधाम्** इति कृष्णाजिने पिष्टानि प्रस्कन्चयति **देवो वः सविता हिरण्यपाणिः प्रतिगुह्णातु।** हविः पत्न्यै प्रयच्छन्नाह । **असंवपन्ती पिंषाणूनि कुरुतात्**

**पत्नी-** पिनष्टि । दासि वा ।

**अध्वर्युः-** प्रक्षालितानि कपालानि जघनेनगार्हपत्त्यस्याष्टौ दक्षिणत एकादशोत्तरत-स्तदुत्तरतः

पुनरेकादशः सादयित्वा **धृष्टिरसि ब्रह्म यच्छ,** इति धृष्टिमादत्ते गार्हपत्यमभिमंत्रयते। **अपाग्नेऽग्निमामादं जहि,** अंगारं दक्षिणतो निरस्यति। **निष्क्रव्यादंऽसेध ।** अप उपस्पृश्य । अन्यमंगारं कपालोपधानस्थाने निदधाति। **आ देवयजं वह-** तदुपरि मध्यमंकपालं स्थापयति । **ध्रुवमसि पृथिवीं दृंऽहाऽऽयुर्दृंऽह प्रजां दृंऽह सजातानस्मै यजमानाय पर्यूह । निर्दग्धंऽ रक्षो निर्दग्धा अरातयः,** इति कपालेऽङ्गारमत्याधाय **धर्त्रमस्यन्तरिक्षं दृंऽह प्राणंदृंऽहापानं दृंऽहं सजातानस्मै यजमानाय पर्यूह ।** इति मध्यमस्य पुरस्ताद्द्वितीयम् । **धरुणमसि दिवं दृंऽह चक्षुर्दृंऽह श्रोत्रं दृंऽह सजातानस्मै यजमानाय पर्यूह** मध्यमस्य पश्चात्तृतीयम् । **धर्मासि दिशोदृंऽहयोनिददृंऽह प्रजां दृंऽह सजातनस्मैयजमानाय पर्यूह इति मध्यमस्य दक्षिणतः** चतुर्थम् । **चितस्थप्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूह इति** दक्षिणस्य पुरस्तात् पंचमम् । **चितस्थ० पयूहं** इति मध्यमस्योत्तरयोः द्वे सृष्ठे षष्ठम् । **चितः स्थ प्रजामस्मै रयिमस्मै संजातानस्मै यजमानाय पर्यूहं,** इति तत्पश्चात् सप्तमम् तत्पुरस्तात्तथैवाष्टमम्। एवमष्टौ कपालान्युपधाय कपालान्यंगारैश्छादयति। **भृगूणामङ्गिरसां तपसा तप्यध्वम्** इति ।

**यजमानः-** **यानिघर्मेकपालांन्युपचिन्वतिवेधसः । पूष्णस्तान्यपिव्रत इंद्रवायू युंक्तां ।** एवं प्रति कपालयोगं अनुमंत्रयते

**अध्वर्युः-** एवं उत्तरतः **एकादश अग्नीषोमीयस्य उपदधाति** नवमादित्रीणि वायव्यत-आरभ्योत्तरतः प्राक्संस्थानि प्रत्येकं **चितस्थमंत्रेण** समानं । **भृगूणामं० । यानिघर्मेक०।** पुनरेवमेवैकादश **ऐन्द्रवैमृधस्य** उपदधाति । आदेवयजं वहेत्यादि-यानिघर्मेकपालानि इत्यंतं समानं । गार्हपत्ये पात्रीं मदंतीं चाधिश्रित्य वाचंयमः पात्र्यांतिरः पवित्रं कृष्णाजिनात्पिष्टानि संवपति । **देवस्य० हस्ताभ्यामग्नयेजुष्टंऽ संवपाम्यग्नीषोमाभ्या-मिंद्रायवैमृधाय ।** दर्शे । आग्नेयकपालासादनानंतरं ऐंद्राग्नार्थंएकादश सादयित्वा । **संवापे । देवस्य० हस्ताभ्या-मग्नयेजुष्टंऽ**

**संवपाम्यिन्द्राग्निभ्यां** मितिविशेषः । सुश्रृते आह । **आहरापआ३नय ।**

आग्नीध्रः- प्रणीताभ्यः स्रुवेणजलंगृहीत्त्वा पात्रांतरे निधाय वेदं पाणिं चाधःकृत्त्वा एव मदंतीजलमादयोभयं युगपत्पिष्टे क्षिपेत् । **समापो अद्भिरग्मत समोषधयो रसेन स॒ रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृज्यध्वम् ।** इति

अध्वर्युः- पात्रीमधःकृत्त्वा मदंतीजलेन पिष्टान्याल्पावयति । **अद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्यध्वम्, जनयत्यै त्वा संयौमि**, इति मेक्षणेन संयुत्य **मखस्य शिरोऽसि, पृथक्भागं कृत्त्वाभिमर्शयति । अग्नये त्त्वा । अग्निषोमाभ्यांत्त्वा । इंद्रायवैमृधायत्त्वा ।** दर्शे-**अग्नये त्त्वा इंद्राग्निभ्यांत्त्वा ।** कूर्माकारं पुरोडाशं करेति । **मखस्यशिरोसि ।** दक्षिणकपालांगारानपोह्य तेषु पुरोडाशँस्थापयति । **घर्मोऽसि विश्वायुः**, इत्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रित्याङ्गुलीः प्रक्षाल्य **उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्**, इति प्रथयति । उत्तरत आज्यस्थाल्यां तिरः पवित्रं आज्यं निर्वपति । **महीनांपयोस्योषधीनां॒रसस्तस्यतेक्षीयमाणस्यनिर्वपा मिदेवयज्यायै ।** गार्हपत्त्ये उत्तरतो भस्ममिश्रांगारेश्वाज्यस्थालीमधिश्रित्य तथैवोत्तरेषु कपालेषूत्तरंपुरोडाशं **अग्निशोमीयं । ऐद्रंवैमृधंच घर्मोऽसि विश्वायुः**, इत्याग्नेयवत् कपालेष्वधिश्रित्याङ्गुलीः प्रक्षाल्य **उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्** इति मंत्रोण प्रथयित्वा । पात्र्यां जलं प्रक्षिप्य तेन दक्षिणपुरोडाशस्य त्त्वचं ग्राहयति । **त्त्वचं गृह्णीष्व । एवं त्रिः ।** सर्वेषां प्रति कपालयोगं मन्त्रावृत्तिः । दर्शे-ऐद्राग्नस्य एवमेव अधिश्रयणं त्वक्ग्राहणं च कुर्यात् । सायंदोहकुम्भीमानीय **अन्तरित॒ रक्षोऽन्तरिता अरातयः**, इति सर्वाणि हवी॑षि त्रिः पर्यग्नि कृत्वा तदल्मुकं निरस्याप उपस्पृश्य । **देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधिनाके, अग्निस्ते तनुवं माऽतिधाग्** गार्हपत्यमभिमंत्रयते **अग्ने हव्य॒ रक्षस्व।** एवमुत्तरौ पुरोडाशौ उत्तरं वा । तूष्णीं भस्मना अभिवाम्य सांगारं भस्म वेदेन पुरोडाशो-परि प्रक्षिपति । **संब्रह्मणा-पृच्छस्व।** एवं त्रिः । **एवं सर्वेषां ।** प्रेष्यति **अविदहन्तः श्रपयत**, इत्याग्नीध्रं संप्रेष्य वाचं विसृजेत् ।

आग्नीध्रः- हवींषि सुशृतानि कुर्यात् ।

अध्वर्युः- पात्रीप्रक्षालनोदकं गार्हपत्यादुल्मुकेनाभितप्यांतर्वेदि स्फ्येन प्राचीस्तिस्रः रेखाः कृत्त्वा प्रत्यक् त्रिर्निनयति । **एकताय स्वाहा, द्विताय स्वाहा, त्रिताय स्वाहा**

यजमानः- **एकतायेदं न मम, द्वितायेदं न मम, त्रितायेदं न मम,** इति प्रतिमन्त्रं त्यागं कुर्यात् ।

अध्वर्युः- वेदमादत्ते **अयंवेदः पृथिवी**मित्त्यादि अग्निदितस्त्रिर्हरित्यंतं प्रागुक्तं पौर्णमास्यामिदानीमेव-कुर्यात् । **ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि,** इति संप्रेश्य ।

आश्वलायन ब्रह्मा- **भूर्भुवस्वः** इति जपित्वा-ॐ ३ **परिगृहाण** इति अति सृजति ।

बौधायनीय ब्रह्मा- **ब्रहस्पते परिगृहाण वेदिं ब्रह्मणा यज्ञं परिगृहीतम् । सप्तऋषीणाः लोकस्तत्रेमं यज्ञं यजमानं च धेहि ।।** इति जपित्वा - ॐ ३ **परिगृहाण** इति अतिमृजति ।।

अध्वर्युः- दक्षिणांसमारभ्य-दक्षिणश्रोणि पर्यंतं स्फ्येन स्पृशति। **ऋतमसि**, दक्षिणश्रोणिमारभ्योत्तर-श्रोणेः **ऋतसदनमसि**, उत्तरश्रोणिमारभ्योत्तरांसपर्यतं **ऋतश्रीरसि**, वेद्यांमृदमानीय-प्राचीमारभ्य प्रत्यगपवर्गं स्फ्येन समीकरोति । **धा असि स्वधा अस्युर्वी चासि वस्वी चासि पुरा क्रूरस्या विसृपो विरप्शिन्, उदादाय पृथिवीं जीरदानुर्या-मैरयञ्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य यजन्ते**, वेदेः पश्चिमतृतीयभागे पूर्वार्धे तिरश्चीं लेखमालिख्य तिर्यचं स्फ्यं धारयंत्संप्रैषमाह । **प्रोक्षणीरासादयेध्मा-वर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि पत्नीः संनह्याऽऽज्येनोदेहि ।**

आग्नीध्रः- प्रोक्षणीरभिपूर्य, अध्वर्यवे प्रयच्छति ।

अध्वर्युः- स्फ्योपरि किंचिंन्निनीय रेखायां प्रोक्षणीरासाद्योत्करे स्फ्यमुदस्यति । **योमाहृदामन-सायश्चवाचायोब्रह्मणाकर्मणाद्वेष्टिदेवाः । यःश्रुतेन हृदयेन ण्णाताचतस्येंद्र-वज्रेणशिरश्छिनद्मि** । हस्तौ प्रक्षाल्य स्फ्यं च प्रक्षालयति ।

आग्नीध्रः- प्रणीतोत्तरः प्रागग्रमिध्मं तदुत्तरतो वर्हिर्निधाय दक्षिणहस्तेन स्रुवं जुहूपभृतौ-सव्येन ध्रुवां प्राशित्रहरणं वेदपरिवासनानि चादययुगपत् गार्हपत्ये प्रतितपति । **प्रत्युष्टः**

रक्षः प्रत्युष्टा अरातयः, अग्नेर्वस्तेजिष्ठेनतेजसानिष्टपामि । द्विस्तूष्णीं। दक्षिणहस्तवेष्टितैर्वेदतृणैः स्रुवं संमार्ष्टि । **गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाह ऽ संमार्ज्मि ।** इति त्रि स्रुवबिलं अन्तरतः त्रिवाह्यतः-त्रिर्मूले दंडऽ संमृज्याद्भिः संऽस्पृश्य प्रतितप्य परिकर्मणे प्रयछति । सोग्रेणोत्करं तृणानि संऽ स्तीर्य तेषु स्रुवादीनासादयति । जुहूं-**वाचं प्राणं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीऽ संमार्ज्मि** स्रुववत् । उपभृतं-**चक्षुः श्रोत्रं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाही ऽ संमार्ज्मि ।** ध्रुवां-**प्रजां योनिं मा निर्मृक्षं वाजीनीं त्वा सपत्नसाही ऽ संमार्ज्मि ।** प्राशित्रहरणं-**रूपं वर्णं पशूनां मा निर्मृक्षं वाजि त्वा सपत्नसाह ऽ संमार्ज्मि ।** तूष्णींवा । संमार्गतृणान्यद्भिः सऽस्पृश्य गार्हपत्त्येनुप्रहरति । **दिवः शिल्पमवततं पृथिव्याः ककुभिः श्रितम्। तेन वय ऽ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहा ।** उत्करे वा निदधाति ।

यजमानः- **प्रजापतय इदं न मम,** इत्यग्नौ प्रहरणपक्षे त्यागो ः न न्यास पक्षे ।

पत्नी- वेद्युत्करयोर्मध्येन प्रपाद्य गार्हपत्त्यस्य प्रत्यक्दक्षिणत उदीचीमूर्ध्वजानुमुपविश्य योक्त्रेण संनह्यति । **आशासाना सौमनसं प्रजा ऽ सौभाग्यं तनूम् । अग्नेरनुव्रता भूत्वा सं नह्ये सुकृताय कम् ।** आग्नीध्रः अध्वर्युः वा पत्नीं वाचयति । **युक्तंक्रियाताआशीःकामेयुज्यातै इति ।** सा तिरः पवित्रमप आचामयति । **पयस्वतीरोषधयः पयस्वद्वीरुधांपयः || अपांपयसोयत्त्पयस्ते नमामिंद्रसऽसृज||** द्विस्तूर्ष्णीं || शेषंसमाप्य आहवनीयं परिपिच्य समिध आदधाति || **अग्नेव्रतपतेव्रतं-चरिष्यामितच्छकेयंतन्मेराध्यतांऽस्वाहा || अग्नयेव्रतपतयइद० वायोव्रतपतेव्रतं-चरिष्यामितछेकेयंतन्मेराध्यतांऽस्वाहा || वायवे व्रत पतय इदं न मम || व्रतानांवृत पतेव्रतंचरि० व्रतानांव्रतपत** इदं० **आदित्य व्रतपते० आदित्त्याय व्रत०** गार्हपत्यं परि पिंचति || पत्नी गार्हपत्त्यस्य पश्चादामनात्तृणं निरस्य प्राङ्मुख्युपविश्य जपति । **सुप्रजसस्त्वा वय ऽ सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो**

**अदाभ्यम्** । इति दक्षिणत उदीच्युपविश्य **इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा । अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाय । ममपुत्राः शत्रुहणोथोमे-दुहिताविराट्। उताहमस्मिसंजयापत्युर्मेश्लोकउत्तमः । ऊनेतिरिक्तंधीयातै।** पत्नीं गार्हपत्यमीक्षयति । **अग्ने गृहपत उप मा ह्वयस्व,** इति गार्हपत्यमुपस्थाय **देवानां पत्नीरुप मा ह्व यध्वं पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिꣳसीः ।** आज्यमवेक्षयति **महीनां पयोऽस्योषधीनाꣳ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे, सुप्रजास्त्वाय ।** आज्यस्थालीं गार्हपत्येऽधिश्रयति । **तेजोसि** आज्यस्थाल्या-अधस्तात्समिधं धृत्त्वा प्राꣳहरति । **तेजोनुप्रेहि ।** आहवनीयेऽधिश्रयति । **अग्निस्तेजोमाविनैत्।** समिधमाहवनीयेभ्यादधाति । **स्वाहा ।**

**यजमानः-** **अग्नय इदं०**

**अध्वर्युः-** एतदाज्यमग्रेण प्रोक्षणीःपर्याहृत्त्य प्रोक्षणीसमं रेखायां वेद्यां दक्षिणतो निदधाति ।

**यजमानः-** **अक्षिणी पूर्वं निमील्यावेक्षते । आज्यमामसि सत्यमसि सत्यस्याध्यक्षमसि हविरसि वैश्वानरं वैश्वदेवमुत्पूतशुष्मꣳ सत्यौजाः सहोऽसि सहमानमसि सहस्व रातीः सहस्वारातीयतः सहस्व पृतनाः सहस्व पृतन्यतः। सहस्रवीर्यमसि तन्मा जिन्वाऽऽज्यस्याऽऽज्यमसि सत्यस्य सत्यमसि सत्यायुरसि सत्यशुष्ममसि सत्येन त्वाऽभिघारयामि तस्य ते भक्षीय ।**

**अध्वर्युः-** आज्यं यथाहृतं पर्याहृत्य वेद्युत्तरार्धे-स्फ्यस्य वर्त्मनि निधायावेक्षते । **अग्नेर्जिह्वाऽसि सुभूर्देवानां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे भव ।** आज्यं त्रिरुत्पनाति उदिचीनाग्राभ्यां पवित्राभ्यां **शुक्रमसि,** प्रथमं **ज्योतिरसि,** इति द्वितीयं **तेजोऽसि,** इति तृतीयं । प्रोक्षणीः पुनः त्रिरुत्पूय **देवो वः सवितोत्पुनातु, अच्छिद्रेण पवित्रेण, वसोः सूर्यस्य रश्मिभिः,** प्रोक्षणीषु पवित्रे निधाय । दक्षिणहस्तेन स्रुवं सव्येन जुहूमादाय तां वेद्यां निधाय तस्यां स्रुवेणाज्यं गृह्णाति । **शुक्रं त्वां शुक्रायां धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि ।** इति मंत्रावृत्या चतुर्वारं गृहित्वा

जुहूं संमृज्य परिकर्मिणे प्रयछति । स इध्माबर्हिषोः प्रत्यङ्निदधाति नोत्करे ।

यजमानः- **पंचानांत्वावातानांयंत्रायधर्त्रायगृह्णामि । पंचानांत्वर्त्तूनां० यं०। पंचानांत्वादिशां० पंचानांत्वा पंचजनांनां यं० । पञ्चावत्तिनां** पंचमावदानगृहणमनुमंत्रणं च चतुर्थमंत्रेण तूष्णी वा ।

अध्वर्युः- **उपभृति** जुहूवच्चर्तुगृहीतादल्पशोष्टकृत्वो गृह्णाति **ज्योतिस्त्वा ज्योतिषि-धाम्ने धाम्ने देवेभ्यो यजुषे यजुषे गृह्णामि** इतिमन्त्रावृत्या ।

यजमानः- **चरोस्त्वापंचविलस्ययंत्रायधत्रायगृह्णामि । ब्रह्मणस्त्वातेजसेयंत्राय० क्षत्रस्यत्वौजसेयंत्राय० । विशेत्वा० सुवीर्यायत्वा० । सुप्राजास्त्वाय० । रायस्पोषायत्वागृ० । ब्रह्मवर्चसायत्वागृ०**

अध्वर्युः- जुहूवत्संमृज्यप्रयछति । स उत्तरेण जुहूंऽसादयति । **ध्रुवायां** पूर्ववच्चतुर्गृह्णाति । **अर्चिस्त्वार्चिषिधाम्नेधाम्नेदेवेभ्योयजुषेयजुषेगृह्णामि** इतिमन्त्रावृत्या ।

यजमानः- **भूरस्माकं हविर्देवानांऽआशिषोयजमानस्य देवानांत्वा देवताभ्यो गृह्णामि।** इति अनुमंत्रयते ।

अध्वर्युः- पूर्ववत्समृज्य ददाति । स उपभृतादुत्तरतो निदधाति । पंचावत्ति यजमनश्चेत् **कामायत्वा गृह्णामि** इति पंचमम् गृह्णीयात् । स्रुवमाज्यस्थालीम् वेदेःपश्चात् निधाय प्रोक्षणीभिरुपोत्तिष्ठति । **आपोदेवी० वृत्रतूर्ये** । अद्भिरपःप्रोक्षति । **प्रोक्षितास्थ** त्रिः । इध्मं विस्रस्य प्रोक्षति । **कृष्णोऽस्या-खरेष्ठोऽग्नये त्वा स्वाहा** । इति वेदिं प्रोक्षति।। **वेदिरसि वर्हिषे त्वा स्वाहा। वर्हिरसि स्रुगभ्यस्त्वा स्वाहा** इति वर्हिः। वर्हिरग्रेणेध्मं प्रणीताहवनीययोर्मध्ये नीत्वांतर्वेदि पुरोग्रंथि ऊर्ध्वाग्रं निधाय तिष्ठन् अग्राणि प्रोक्षति । **दिवेत्वा** प्रह्वो मध्यानि **अंतरिक्षायत्वा** । आसीनो मूलानि । **पृथिव्यै त्वा** । प्रोक्षणीपुष्करस्याधास्तात् पाणिं समाग्रं कृत्वा प्रत्यंङ्मुखाभ्यां स्रुवपाणिभ्यां ग्रंथिमासिच्य शिष्टं जलं दक्षिणं श्रोणिमारभ्योत्तरश्रोणि पर्यंतं निनयति । **स्वधा पितृभ्य उर्भव वर्हिषद्भ्यः ऊर्जा पृथिवीं गच्छत ।**

**यजमानः-** **पितृभ्यो वर्हिषद्भ्य इदं न मम ।**

**अध्वर्युः-** हग्निहोत्रहवणीमात्मनः पश्चादुदगग्रां निरस्यापुपस्पृश्य बर्हिर्विस्रस्याप उपस्पृश्य प्रथमं प्रस्तरं गृह्णाति । **विष्णोः स्तूपोऽसि,** इति प्रस्तरे पवित्रे आनयाति प्रस्तरमग्रेणहवनीयं पपर्याहृत्य यजमानाय प्रयच्छति **यजमाने प्राणापानौ दधामि ।** इति यजमानाय ब्रह्मणे वा । बर्हिःसंनहनं विस्रस्याप उ० । दक्षिणश्रोणिमारभ्योत्तरांसपर्यतं निधायाबर्हिर्मुष्टिप्रागग्रंस्तृणाति **देवबर्हिऊर्णामृदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः ।** एवं द्वितीयं तृतीयं प्रत्यक् वेदिं प्रागास्तृतबर्हिर्मूलानि च प्रछादयन् । प्रस्तरपाणिः - प्राङभिसृप्योदगग्रं मध्यमं पारधिं परिदधाति **गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडितः ।**

**यजमानः-** **ध्रुवोऽसि ध्रुवोऽहं॰ सजातेषु भूयासं धीरश्चेत्ता वसुवित् ।** इत्यनुमन्त्रयेत

**अध्वर्युः-** **इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडितः ।** इति प्रागग्रं दक्षिणं परिधिं परिदध्यात् ।

**यजमानः-** **उग्रोऽस्युग्रोऽहं॰ सजातेषु भूयासमुग्रश्चेत्ता वसुवित् ।** इति परिधीयमानं दक्षिणं परिधिमनुमन्त्रयेत ।

**अध्वर्युः-** **मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडितः।** इति प्रागग्रमन्योन्यसँस्पृष्टमुत्तरं परिधिं परिदध्यात् ।

**यजमानः-** **अभिभूरस्यभिभूरहं॰ सजातेषु भूयासमभिभूश्चेत्ता वसुवित् ।** इति परिधीयमानमुत्तरं परिधिमनुमन्त्रयेत

**अध्वर्युः-** **सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्याः ।** सूर्यं पुरस्तान्मनसा परिधिं कल्पयति

**यजमानः-** **युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः ।** इत्यनुमन्त्रयते

**अध्वर्युः-** ऊर्ध्वसमिधे अग्नौ आदधति **वीतिहोत्रंत्वाकवेद्युमतंसमिधीमह्यग्नेवृहंतमध्वंरे।** इति दक्षिणां तूष्णीमुत्तरां ।

**यजमानः-** अनुमंत्रयते **इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग्जीवेम बलिहृतो वयं ते ।**

**अध्वर्युः-** परिभोजनीयेभ्योदर्भद्वयमादायविधृती कृत्वा विधृती मन्तर्वेद्याम् उदगग्रे निदधाति **विशोयंत्रेस्थः।** तदुपरि प्रागग्रंप्रस्तरं । **वसूनाः रुद्राणामादित्यानाः सदसि सीद ।** प्रस्तरे जुहूं सादयति **जुहूरसि धृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद ।** उत्तरतो विधृत्योरधस्तात् **उपभृदसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सद** इति उपभृतम् । उत्तरतो धृवां **ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीद ।** स्रुचः सकृदेवाभिमृशति । **एता असदन्त्सुकृतस्य लोके ता विष्णोः पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनयम् ।** आज्यस्थालीं स्रुवं च तदुत्तरतःस्तूष्णीःसादयित्वा सर्वाणयाज्यान्यभिमंत्रयते । **विष्णूनि स्थ वैष्णवानि धामानि, स्थ, प्राजापत्यानि ।** दक्षिणेनाज्यस्थालीः सस्रुवाँ सव्येनदारुपात्रीं वेदं चादाय प्रदक्षिणं प्रत्यः ङ्हत्य जघनेनगर्हपत्यमुपविश्य पात्र्यांमुपस्तृणीते । **स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामितस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ।** एवं यावत्पुरोडाशं । धृष्ठिमादाय प्रथमपुरोडाशस्यांगारानपोहति। **इदमहःसेनायाअभीत्वर्यै-मुखमपोहामि ।** पुरोडाशं प्रकाशयति । **सूर्यज्योतिर्विभाहि महत इन्द्रियाय,** धृष्टिं निधय वेदेन विरजसं कृत्वाभिघारयति । **आप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाऽग्नये जुष्टमभिघारयामि ।** पुरोडाशमुद्वासयति । **श्रृतउत्स्नाति-जनितामतीनां** आज्येन संतर्पयति । **आर्द्रःप्रथस्तुर्भुवनपगोपाः ।** आज्याक्तहस्तेना-पर्यावर्तयन्नधस्तादभ्यंङ्क्ते **यस्तआत्मापशुषुप्रविष्टस्तमंक्ष्व ।** पात्र्यां निधाय पूर्ववदुत्तरपुरोडाशांगारापोहनादिपात्र्यां निधानातं करोति । अभिघारणेविशेषः । **आप्यायतां० तेजसाग्निषोमाभ्यांजुष्टमभिघारयामि । तेजसेंद्रायवैमृधायजु०। दर्शे आग्नेयानंतरं । शृतं दाधि च अभिघरयति । आप्यायतां० तेजसा महेन्द्राय / इन्द्राय वा जुष्टमभिघरायामि** इति सन्तयतः / असन्नयतः **आप्याय०**

**इन्द्राग्निभ्यां जुष्टं०।** । कपालानि प्रत्येकमनक्ति। **इराभूतिः पृथिवीरसोमोत्क्रमीत्** प्रति कपालयोगं मन्त्रावृत्तिः । कपालानि संख्यायोद्वासयति ।

यजमानः- **यानिघर्मे० इंद्रवायूविमुंचतां** । एवमुत्तराणि ।

अध्वर्युः- स्रुवमभिपूर्य पुरोडाशयोर्मध्ये स्थापयित्वा । सर्वाणि हवीꣳष्यादायांन्तर्वेदिस्रुचः- पश्चात्सादयति । **भूर्भुवःसुवः** इति । यजमानश्च **भूर्भुवः सुवः** इति ब्रूयात् । आज्यपूर्णं स्रवमग्रेण स्रुचःपर्याहृत्य दक्षिणजुहूं प्रस्तरे सादयति । **स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्स पत्नाः** । यथाहृतमानीय- ध्रुवायामवनयति । **ऋषभोऽसि शाक्वरो घृताचीना सूनुः प्रियेण नाम्ना प्रिये सदसि सीद** ।

यजमानः- हवीꣳष्यनुमंत्रयते । **यन्मे अग्नेअस्ययज्ञस्यरिष्याद्यद्वास्कंदादाज्यस्योतविष्णो । तेनहन्मिसपत्नंदुर्मरायुमेनंदधामिनिर्ऋत्याउपस्थे** । होतारं वृणी ते **आस्मिन् कर्मणि होतारं त्वमहं वृणो** इति । होताः वृतोस्मिकर्मकारिष्यामि इति ब्रूयात् ।

अध्वर्युः- **होतरे३हि,** इति होतारमाह्वयति ।

होता- प्रागुदगाहवनीयादवस्थाय प्राङ्मुखो यज्ञोपवीन्याचम्य दक्षिणावृद्विहारं प्रपद्य पूर्वेणोकरमपरेण प्रणीताः प्रपद्याभिहिततरेण पादेन वेदिश्रोण्योत्तरया पार्ष्णी समां निधाय पदेन बर्हिराकम्य सिंहितौ पाणी धारयन्नाकाशवत्यङ्गुली हृदयसंमितावङ्कसंमितौ वा, द्यावापृथिव्योः संधिमीक्षमाणस्तिष्ठेत् ।

अध्वर्युः- **अग्नये समिध्यमानायानुवू ३ हि** । इति होतारं संप्रेष्य होत्रा सामिधेनीपूच्यमानासु प्रणवे प्रणवे समिधमाधाय, **समिद्धो अग्न आहु** तेति श्रुत्वा, एकामनूयाजसमिधमवशेष्य सर्वमिध्मशेषमप्यादध्यात्परिधानीयायां वा । वेदेन त्रिराहवनीयस्योपरि वाजयति । (परिधानीया नाम - आजुहोतादुवस्यत - इति ऋक्)

होता- **नमः प्रवक्त्रे नम उपद्रष्ट्रे नमोऽनुख्यात्रे क इदमनुवक्ष्यति स इदमनुवक्ष्यति षण्मोर्वीरंहसस्पान्तु द्यौश्च पृथिवी चाहश्च रात्रिश्चाऽऽपश्चौषधयश्च**

**वाक्समस्थितयज्ञः साधुच्छन्दासि प्रपद्येऽहमेव मां** देवदत्तशर्माणम् । इति स्वं नामाऽऽदिश्य **भूते भविष्यति जाते जनिष्यमाण आभजाम्यपाव्यं वाचो अशान्तिं वह** । इत्यङ्गुल्यग्राण्यवकृष्य **जातवेदो रमया पशून्मयि,** इति प्रतिसंधाय **वर्म मे द्यावापृथिवी वर्माग्निर्वर्म सूर्यो वर्म मे सन्तु तिरश्चिकाः । तदद्य वाचः प्रथमं मसीय येनासुराँ अभिदेवा असाम । ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम् ।** इति **जपित्वा । हि३म्** (उच्चैः) **भूर्भुवः स्वरो३म् ।** इत्युपांशु जपित्वा **प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयो३म् प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या ।। देवाञ्जिगाति सुम्नयो३म् प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयो३मग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषों३तं त्वा सभिद्धिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्यौ३स नः पृथुश्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यो३मीळेऽन्यो नमस्यस्तिरस्तमांसि दर्शतः । समाग्निरिध्यते वृषों३ वृषो अग्निः समिध्यतेऽश्वो न देववाहनः । तं हविष्मन्त ईळतों ३ वृषणं त्वा वयं वृषन् वृषणः समिधीमहि । अग्ने दीद्यतं बृहो३मग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतों३ समिध्यमानो अध्वरेऽग्निः पावक ईड्यः । शोचिष्केशस्तमीमहों३ समिद्धो अग्न आहुत देवान्यक्षि स्वध्वर । त्वं हि हव्यवाद्वसो३माजुहोता दुवस्यताग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनो३ माजुहोतादुवस्ययाग्निं प्रयत्यध्वरे वृणीध्वं हव्यवाहनो३माजुहोतादुवस्ययाग्निं प्रयत्यध्वरे वृणीध्वं हव्यवाहनो ३ मग्ने महाँ असि ब्राह्मणभारत** । इति निगदेऽवसाय यजमानस्याऽऽर्षेयान्प्रवृणीत यावन्तः स्युः परं परं प्रथमम्। (काश्यपावत्सारासित इति) अवसाय

यजमानः- प्रथम ममिधाधानानन्तरम् **अग्नय इदं नमम ।। उच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्नेदेवेद्ध मन्विद्ध मन्द्रजिह्वेति ।**

अध्वर्युः- ब्राह्मणभारतेत्यवसानकाले ध्रुवाज्यं स्रुवेणोपहत्याधस्तद्वेदं कृत्वा दक्षिणं परिधिमारभ्योत्तरात्परिधेरासीनस्तिर्यचमाघारमाघारयति । मनसा **प्रजापतये स्वाहा।**

यजमानः- **प्रजापतय इदं न मम । मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविश ।**

होता- **देवेद्धो मन्विद्धं ऋषिष्टुतो विप्रानुमदितः कविशस्तो ब्रह्मसंशितो घृताहवनः**

**प्रणीर्यज्ञानां रथीरध्वराणामतूर्तो होता तूर्णिर्हव्यवाट्,**

यजमानः- अर्षेयान्प्रवृणानंहोतारमनुमंत्रयते । **अमर्त्यस्यतेहोतर्म्मूर्धन्नाजिघर्मिरायस्पोषाय-सुप्रजास्त्वाय सुवीर्याय ।**

अध्वर्युः- **अग्नीदग्नीँस्त्रिःत्रिसमृद्धि ।**

आग्निध्रः- स्फ्यवेष्टितमिध्मसंनहनैः परिधीन्यथापरीधितमन्वग्रं त्रिस्त्रिः संमृज्य **अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निं-मन्नादमन्नाद्याय**, इति त्रिरग्निं प्राञ्चं संमृज्यात्।

अध्वर्युः- **भुवनमसि विप्रथस्वाग्ने यष्टरिदं नमः**, इत्यग्रेण जुहूंपभृत नमस्काराञ्जलिं कृत्वा **जुह्वेह्यग्निस्त्वाऽऽह्वयति देवयज्यायै**, इति दक्षिणहस्तेन जुहूमादाय **उपभृदेहि देवस्त्वा सविता ह्वयति देवयज्यायै**, इति सव्यहस्तेनोपभृतमादाय देवताहान काले सव्यपादेन प्रङ्मुखः अग्रेणस्रुच वेदिमत्याक्रमं जपति नाभिदेशे च स्रुचौ धारयेत्) **अग्नाविष्णु मा वामवक्रमिषं विजिहाथां मा मा संताप्तं लोकं मे लोककृतौ कृणुतम् ।** आहवनीयदक्षिणतस्थानं कल्पयति **विष्णोस्थानमसि** इति ।

होता- **आस्पात्रं जुहूर्देवानां चमसो देवपानोऽराँ इवाग्ने नेमिर्देवाँस्त्वं परिभूरस्याऽऽवह देवान्यजमानाय**, इत्यवासाय **अग्निमग्न आ३वह, सोममा३वह, अग्निमा३वह विष्णुम्** (उपांशु) **आ३वह अग्नीषोमा वा३ वह इन्द्रं वैमृधमा३वह देवाँ आज्यपां आ३ वह अग्निंहोत्राया३ वह स्वं महिमान मा३वह ।** दर्शे-उपशुयागानन्तरं असंन्नयतः **इन्द्राग्नी आ३वह ।** सन्नयतः- इन्द्रमा३वह **महेन्द्रमा३वह इति वा देवाँ आज्यपाँ आ३वह, अग्निं होत्रायाऽऽवह, स्वं महिमानमा३वह, आवह जातवेदः सुयजा यज**, इत्यावाह्य यथास्थितमूर्ध्वजानुरूपविश्य **अदितिर्माताऽ-स्यान्तरिक्षान्मा च्छेत्सीरिदमहमग्निना देवेन देवतया त्रिवृता स्तोमेन रथंतरेण साम्ना गायत्रेण छन्दसाऽग्निष्टोमेन यज्ञेन वषट्कारेण वज्रेण योऽस्माद्वेष्टि यं च वयं द्विष्मस्तं हन्मि ।** इत्युदग्वेदेर्व्युह्य तृणानि भूमौ प्रादेशं कुर्यात् ।

अध्वर्युः- यजमानेन स्रुच्यन्वारध्वौ मध्यमपरिधेस्संस्पृष्य सन्ततं प्रांचमाघारयति । **इंद्रो**

**अकणोद्वीर्याणिसमारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञ-पतेरिन्द्रावान्त्स्वाहा** इति ।

यजमानः- **इन्द्रायेदं न मम, वर्गस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाऽऽविश ।**

अध्वर्युः- स्रुचमुद्गृह्णाति **बृहद्भाः** असंस्पर्शयन् स्रुचौदक्षिणेन पदा उदङ्प्र **त्याक्रमंजपति । पाहिमाग्नेदुश्चरितादामासुचरितेभज ।** जुह्वाध्रुवाःसमनक्ति । **मखस्यशिरोसि-संज्यौतिषाज्योतिरक्तां ।** द्विस्तूष्णीं । यथायतनंस्रुचौसादयित्त्वा स्फ्यमुत्करेदेशे उर्ध्वाग्रं निहत्य पृष्ठत आग्नीध्रं कृत्वा प्रह्व आश्रावयति । **ओ३श्रा३वय ।**

आग्नीध्रः- **अस्तुश्रौ३ष२३ट्** इति प्रत्याश्रावयति ।

अध्वर्युः- **अग्निर्देवो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्यवद्भरतवदमु**-वदमुवदिति यथाऽऽर्षेयो जयमानः यथा - असितवदवत्सार वत्कश्यपवत् । इत्यूर्ध्वज्ञुमासीनं होतारं वृत्वा **व्रह्मण्वदा च वक्षव्राह्मणा अस्य यज्ञस्य प्रावितारः**, इत्युक्त्वा होतुर्नामोपांशूक्त्वा **मा३नुषः** इति होतारमामन्त्रयेत् ।

होता- **आश्रावयं यज्ञं देवेष्वाश्रावय मां मनुष्येषु कीर्त्यै यशसे व्रह्मवर्चसाय । देव सवितरेतं त्वा वृणतेऽग्निं होत्राय सह पित्रा वैश्वानरेण द्यावापृथिवी मां पातामग्निर्होताऽहं मानुषः ।** इति प्रवृणानमध्वर्युमनुमन्त्र्य **मानुष** इत्यध्वर्योः श्रुत्वा **उदायुषा स्वायुषोदोषधीनां रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अनु**, इत्युत्थाय **षष्टिश्चाध्वर्यो नवतिश्च पाशा अग्निं होतारमन्तरा विचृताः । सिनन्ति पाकमतिधीर एति**, इति जपित्वा **ऋतस्य पन्थामन्वेमि होता**, इत्यध्वर्युसमीपं गत्वा **इन्द्रमन्वारभामहे होतृवृर्ये पुरोहितम् । येनायन्नुत्तमं स्वर्देवा अङ्गिरसी दिवम् ।** इत्यंसेऽध्वर्युं पार्श्वस्थेन दक्षिणेन पाणिनाऽऽग्नीध्रमंङ्केदेशेन सव्येनपाणिना वाऽन्वारभ्य **संमार्गोऽसि सं मां प्रजया पशुभिर्मृड्ढि**, इति संमार्गतृणैस्त्रिरभ्यात्मं **मुखं** सकृन्मन्त्रेण द्विस्तूष्णीं संमृज्योदकं स्पृट्वा स्वासनस्य पश्चादवस्थाय **अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाक तरः** इति होतृषदनमभिमन्त्र्य **निरस्तः परावसुः**, इत्यङ्गुष्ठोपकनिष्ठिकाभ्यां होतृषदनात्तृणं प्रत्यग् दक्षिणा निरस्याप उपस्पृश्य । **इदमहमर्वावसोः सदने सीदामि**, इति दक्षिणोत्तरिणोपस्थेनोपविश्य **देवबर्हिः स्वासस्थं त्वाऽध्यासदेयम्**, इति जपित्वा **अशिहिष होतः प्रतरां बर्हिषद्भव,**

इति जानुशिरसा बर्हिरुपस्पृश्यात् ऊर्ध्वं जपेत् **भूपतये नमो भुवनपतये नमो भूतानां पतये नमो भूतये नमः प्राणं प्रपद्येऽपानं प्रपद्ये व्यानं प्रपद्ये वाचं प्रपद्ये चक्षुः प्रपद्ये श्रोत्रं प्रपद्ये मनः प्रपद्य आत्मानं प्रपद्ये गायत्रीं प्रपद्ये त्रिष्टुभं प्रपद्ये जगतीं प्रपद्येऽनुष्टुभं प्रपद्ये छन्दांसि प्रपद्ये सूर्यो नो दिवस्पातु वातो अन्तरिक्षात्। अग्निर्नः पार्थिवेभ्यः । नमो महद्भ्यो नमो अर्भकेभ्योनमो युवभ्यो नम आशिनेभ्यः । यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमावृक्षि देवाः । विश्वे देवाः शास्तन मा यथेह होता वृतो मनवै यन्निषद्य । प्र मे ब्रूत भागधेयं यथा वो येन पथा हव्यमा वो वहानि । अराधि होता निषदा यजीयानभिप्रयांसि सुधितानि हि ख्यत् । यजामहै यज्ञियान्हन्त देवाँ ईळामहा ईड्याँ आज्येन । तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवा असाम । ऊर्जाद उत यज्ञियासः पञ्चजना मम होत्रं जुषध्वम्** । इति जपित्वा प्रदीप्ते इध्मे। **अग्निर्होता वेत्त्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु ते यजमान देवता यो अग्निम् । होतारमवृथाः**, इति जपित्वा **घृतवतीमध्वर्यो स्रुचमास्यस्व देवयुवं विश्ववारे ईळामहै देवाँ ईळेऽन्यान्नमस्याम नमस्यान्यजाम यज्ञियान्** । इतिः निगदशेषं समापयेत् । अग्निर्होतेत्यारभ्य यज्ञियानित्यतोऽयमेकः **स्रुगादापननिगदः।**

**अध्वर्युः-** होत्रा, घृतवतीशब्दमुच्यमानं श्रुत्वा **जुहूपभृतावादायात्याक्रामति** । अतऊर्ध्वं-दक्षिणेन क्रमणं सव्येन प्रत्याक्रमणं भवतः ।

**आग्नीध्रः-** उत्करदेशे तिष्ठन् अध्वर्युणा आश्राविते **अस्तुश्रौरषट्** इतिप्रत्याश्रा वयति ।

**अध्वर्युः-** आश्राव्य प्रत्याश्राविते **समिधो यज**, इति प्रथमं प्रयाजं प्रति होतारं संप्रेष्येत् ।

**होता-** **ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू ३ वौ ३ षट्**, इति वषट्कारमुक्त्वा **वागोजः सह ओजो मयि प्राणापानौ**, इति वषट्कारमुपाश्वनुमन्त्रयेत। वषट् कृते-वषट्कृते सर्वत्र

**अध्वर्युः-** होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसंभेदं पुरस्तात्प्रथमं प्रयाजं जुह्वा जुहुयात् ।

**यजमानः-** **वसन्ताय इदं न मम**, इति त्यागं कृत्वा **वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु** ।

**अध्वर्युः-** आश्राव्य प्रत्याश्राविते ।

अध्वर्युः- **यज**, इति द्वितीयं प्रयाजं प्रति होतारं संप्रेष्येत् ।

होता- **ये ३ यजामहे तनूनपादग्न आज्यस्य वेतू३ वौ३षट्**, इति यजेत (ये३ यजामहे नराशंसो अग्न अज्यस्य वेतू३ वौ ३ षट् अयं प्रयाजो द्वितीयप्रयाजः नूनपा त्स्थाने वसिष्ठशुनकात्रिवाध्र्यश्वराजन्यानां वक्त्व्यः ।

अध्वर्युः- होत्रा **वौषडित्यु**क्तेऽपरेणाऽऽघारसंभेदं दक्षिणतो द्वितीयं प्रयाजं जुह्वा जुहुयात् ।

यजमानः- **ग्रीष्माय इदं न मम**, इति त्यागं कृत्वा **ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु ।**

अध्वर्युः- आश्राव्य, प्रत्याश्राविते । **यज**, इति तृतीयं प्रयाजं प्रति होतारं संप्रेष्येत् ।

होता- **ये३ यजामह इळो अग्न आज्यस्य व्यन्तू ३ वौ३षट्**, इति

अध्वर्युः- होत्रा **वौषडित्यु**क्तेऽपरेणाऽऽघारसंभेदं पश्चात्तृतीयं प्रयाजं जुह्वा निःशेषं जुहुयात् ।

यजमानः- **वर्षाभ्य इदं न मम**, इति त्यागं कृत्वा **वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु ।**

अध्वर्युः- त्रीन्प्रयाजान् जुह्वेष्ट्वाऽर्धमौपभृतस्थस्याऽऽज्यस्य जुह्वामानीय आश्राव्य, प्रत्याश्राविते **यज**, इति चतुर्थं प्रयाजं प्रति होतारं संप्रेष्येत् ।

होता- **ये३ यजामहे बर्हिरग्न आज्यस्य वेतू ३ वौ३षट्**, इति

अध्वर्युः- होत्रा **वौषडित्यु**क्तेऽपरेणाऽऽघारसंभेदमुत्तरतश्चतुर्थं जुहुयात्।

यजमानः- **शरद इदं न मम**, इति त्यागं कृत्वा **शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु।**

अध्वर्युः- आश्राव्य, प्रत्याश्राविते । **यज**, इति पञ्चमं प्रयाजं प्रति होतारं संप्रेष्येत् ।

होता- **ये ३ यजामहे स्वाहाऽग्निं स्वाहा सोमं स्वाहाऽग्निं स्वाहा विष्णुं** (उपांशु) **स्वाहा महेन्द्रं स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु ३ वौ३षट्**, इति वषट्कुर्यात् । पञ्चमे प्रयाजे सर्वत्र आवाहनक्रमेण द्वितीयान्तेन देव ता नाम आदिशेत्

अध्वर्युः- होत्रा वौषडित्युक्तेऽपरेणाऽऽघारसंभेदं मध्ये पञ्चमं प्रयाजं जुह्वा सशेषं जुहुयात् ।

यजमानः- **हेमन्त शिरिराभ्यां इदं न मम**, इति त्यागं कृत्वा **हेमन्तशिशिरावृतूनां प्रीणामि**

**तौ मा प्रीतौ प्रीणीतां ।**

अध्वर्युः- पूर्वोक्तेन प्रकारेण प्रत्याक्रम्य जुह्वाऽऽज्यशेषेण ध्रुवामभिधार्य प्रयाजशेषेण आनुपूर्वं हवींष्यघायति । प्रथममाग्नेयं ततो ध्रुवां तातो इतराणि हवींषि औपभृतमन्त निःशेषं पातयति । स्वायतने जुहूपभृतौ सादयित्वा तूष्णीं ध्रुवास्थमाज्यं स्रुवेणादाय जुह्वा चतुर्गृह्वन् आह **अग्नयेऽनुब्रू३हि** इति **आग्नेयस्य आज्यभागस्य** पुरोनुवाक्यायै होतारं संप्रेष्येत्।

होता- **अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं स्वाम् । कविर्विप्रेण वावृधो३म् ।** इति पुरोनुवाक्यां ब्रूयात् । **पौर्णमास्याम्** - अग्निः प्रत्नेनेत्यस्याः पुरोनुवाक्यायाः स्थाने **अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतो३म्।** इति पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः- दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा आश्राव्य, प्रत्याश्राविते । **अग्निं यज,** इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये ३ यजामहेऽग्निं जुषाणो अग्निराज्यस्य वेत् ३ वौ ३ षट्,** इति वषट्कुर्यात्

अध्वर्युः- होत्रा **वौषडित्युक्ते** ज्योतिष्मदग्नेरुत्तराघारपूर्वार्धेऽग्नये जुहुयात् ।

**यजमानः- अग्नय इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- प्रत्याक्रम्य जुहूपभृतावनासाद्य पूर्ववत् चतुरा ज्यस्य गृह्णन् **सोमायानुब्रू३हि,** इति द्वितीयस्याज्यभागस्य पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता- **सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृळीको न आविशो३म् ।** इति पुरोनुवाक्यां ब्रूयात् । **पौर्णमास्याम् ।** सोम गीर्भिष्ट्वेत्यस्याः पुरोनुवाक्यायाः स्थाने **त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- दक्षिणातिक्रम्योदङ्मुखः स्थित्वा आश्राव्य, प्रत्याश्राविते । **सोमं यज,** इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये ३ यजामहे सोमं जुषाणः सोम आज्यस्य हविषो वेतु३ वौ३ षट्,** इति वषट्कारं ब्रूयात् ।

अध्वर्युः- होत्रा **वौषडित्युक्ते** ज्वलदग्नेर्दाक्षिणार्धपूर्वार्धे पूर्वाज्यभागेन समं सोमाय जुहुयात् ।

**यजमानः-** **सोमायेदं न मम**, इति त्यागं कृत्वा **अग्नीषोमयोरहं देवयज्यया चक्षुष्मान्भूयासम्।** इति **हुतावाज्यभागावनुमन्त्रयेत ।**

**अध्वर्युः-** प्रत्याकम्य स्वासन उपविश्य आज्यभागार्थं गृहीते जुहूपभृतौ स्वायतने स्विष्टकृद्याग-समाप्तिपर्यन्तं न निदध्यात् । हस्त एव धारयेदित्यर्थः ।

**यजमानः-** **व्रत्येऽहनि व्रतलोपप्रायश्चित्तं करिष्ये ।**

**अध्वर्युः-** तूष्णीमाज्यस्थाल्या आज्यं जुह्वां चतुर्वारं स्रुवेण गृहीत्वा, **अग्नये व्रतपतये स्वाहा,** इति जुहुयात् । सकृत् चतुर्गृहीतेनेति भवकेशवौ ।

**यजमानः-** **अग्नये व्रतपतय इदं न मम,** इति त्यागं कृत्वा **सर्वप्रायश्चित्तं करिष्ये ।**

**अध्वर्युः-** आज्यस्थाल्या आज्यं स्रुवेण जुहोति **भूर्भुवः सुवः स्वाहा ।** इति ।

**यजमान-** **प्रजापतय इदं न मम**

## अथ पौर्णमास्यां प्रधानयागः

**अध्वर्युः-** उदङ् प्रत्याक्रम्य जुह्वामुपस्तीर्य **आग्नेयस्य पुरोडाषस्य पूर्वार्धाहवद्यन्नाह अग्नयेनुब्रू३हि,** इति पुरोनुवाक्यायै ।

**होता-** **अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

**अध्वर्युः-** पुरोडाषं एकहस्त नमस्कारेणोप तिष्ठते **मा भेर्मा संविक्था मा त्वा हिꣳसिषं मा ते तेजोऽपक्रमीत् । पुरोडाषमभिमृशति भरतमुद्धरेमनुषिञ्चावदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हि ꣳ सीः ।** इत्याग्नेयस्य पुरोडा शस्य पूर्वार्धादङ्गुष्ठपर्वमात्रमवदानं मङ्गुलिमूळ प्रादेशिन्यग्राभ्यां जुह्वामवधाय एवं अपरार्धात् द्वितीयं (पञ्चावत्तिनः मध्यकृत्वा मवदाय जुह्यामवदध्यादिति विशेषः) ध्रौवाज्या दवत्तमभिघार्य **यदवदानानि तेऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्म्येतत्त आप्यायतां पुनः ।** इति स्रुवेणाऽऽज्यस्थाल्या आज्यमादाय हविः प्रत्यभिघार्य सर्वत्रोपस्तरणाभिघारणे पुरस्तादुपरिष्टाच्च आज्याहुती ध्रौवाज्यादेव । प्रत्यंजनन्तु

स्थाल्याज्यात्। दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा। आश्रव्य, प्रत्याश्राविते । **अग्निं यज**, इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये३ यजामहेऽग्निं भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचसे शिवाभिः। दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने च कृषे हव्यवाहाँ३ वौ३षट् ।** इति वषट्कुर्यात् ।

अध्वर्युः- होत्रा **वौषडित्युक्ते** स्त्रुग्गतमाज्यं प्रथमं स्त्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्त्रुक्पार्श्वेन तं पुरोडाशमहिंसन्नाघारसंभेददेशे हुत्वाऽऽज्यशेषमन्ववस्त्रावयेत् । (एवं क्रमश्चरुपुरोडाशादितन्त्रे, न द्रवद्द्रव्यतन्त्रे आज्यव्यतिरिक्त पुरोडाषादि होमेषु पुरस्ता दुपरिष्टाच्च होमोतूष्णीं ध्रौवाज्याहुती जुहोतीति सार्वत्रिकम् । यदा वीतार्चिर्लेलायती-वाग्निरथाऽ-ऽहुतीर्जुहुयात्)।

यजमानः- **अग्नय इदं न मम**, इति त्यागं कृत्वा **अग्नेरहं देवयज्ययाऽन्नादो भूयासम् ।** इत्याग्नेयं पुरोडाशं हुतमनुमन्त्रयेत ।

पौर्णमास्यां अमावास्यायान्च्य आश्वलायन यजमानस्य उपांशुयागः ।

अध्वर्युः- उदङ्प्रात्यक्रम्य आज्याहुति जुहोति **ध्रौवा ज्याच्चनुगृहीष्यन्** (उपांशु) **विष्णवे** (उच्चैः) **अनुब्रू३हि**, इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता- (उपांशु) **इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूहूळमस्य पांसुरे ।** (उच्चैः) ॐ ३ मिति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा आश्रव्य, प्रत्याश्राविते । (उपांशु) **विष्णुं** (उच्चैः) **यज**, इति याज्यायै होतारं संप्रेष्येत् ।

होता- (उच्चैः) **ये ३ यजामहे**, (उपांशु) **विष्णुम् त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा । प्र विष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नामा ३ वौ३षट्**, इति वषट्कुर्यात् (उच्चैः)

अध्वर्युः- होत्रा **वौषडित्युक्ते** स्त्रुच्याघारस्योपरि जुह्वाग्रेण जुहुयात् ।

यजमानः- **विष्णव इदं न मम**, इति त्यागं कृत्वा **दब्धिरस्यदब्धो भूयासं पाप्मानं दभेयम् ।** इत्युपांशुयाजं हुतमनुमन्त्रयेत ।

अध्वर्युः- प्रत्याक्रम्य स्वासन उपविश्य अग्नीषोमीय पुरोडाशास्यापरा र्धादवद्यन् **अग्नीषोमाभ्या-मनुब्रूहि** इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता- **अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- पूर्ववत्पुरोडाषस्योपस्थनादि पुरस्तादाज्या हुतीत्यन्तं कृत्वा दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा आश्राव्य, प्रत्याश्राविते । **अग्नीषोमौ यज**, इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये३ यजामहेऽग्नीषोमौ युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीता३न्वौ-३ षट्**, इति वषट्कुर्यात्

अध्वर्युः- होत्रा **वौषडित्युक्ते** स्रुग्गतमाज्यं प्रथमं स्रावयित्वाऽग्नौ प्रास्तं पुरोडाशं स्थगयन्निव स्रुक्पार्श्वेन तं उपांशुयाजहोमसंनिहितं हुत्वाऽऽज्यशेषमन्ववस्रावयेत् । पूर्ववदुपस्थिदित्यादि

यजमानः- **अग्नीषोमाभ्यामिदं न मम**, इति त्यागं कृत्वा **अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्** । इत्यग्नीषोमीयं पुरोडाशं हुतमनुमन्त्रयेत ।

अध्वर्युः- प्रत्याक्रम्य स्वासन उपविश्य तृतीयस्यपुरोडाषस्यापसार्धादवद्यन् **इन्द्राय वैमृधायानुब्रू३हि**, इति पुरोनुवाक्यायै होतारं संप्रेष्येत् ।

होता- **वि न इन्द्र मृघो जहि नीचा यच्छ पृतन्यतः । यो आस्माँ अभिदासत्यधरं गमया तमो३म्** । इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- पूर्ववत्पुरोडाशोपस्थानादि दक्षिणाऽतिक्रम्योदङ्मुखः स्थित्वा आश्राव्य, प्रत्याश्राविते । **इन्द्रं वैमृधं यज**, इति याज्यायै होतारं संप्रेष्येत् ।

होता- **ये ३ यजामह इन्द्रं वैमृधं मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः । सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून्ताहृळि वि मृधो नुदस्व ३ वौ३षट् ।।**

अध्वर्युः- होत्रा **वौषडित्युक्ते**-पूर्ववत्-अग्नीषोमीयहोमसन्निहितं जुहुयात्। उपरिष्टादित्यादि समानं ।

यजमानः- **इन्द्राय वैमृधायेदं न मम** । इति त्यागं कृत्वा **इन्द्रस्य वैमृधस्याहं देवयज्ययाऽसपत्नो वीर्यवान् भूयासमिति हुत**मनुमन्त्रयेत ।

अध्वर्युः- अथामावाम्यायां आग्नेय उपांशुयागपर्यन्तं पूर्णमासवदेव कृत्वा । प्रधानयागः प्रत्याक्रम्य स्वासन उपविष्य जूहूमुपस्तीर्य **महेन्द्रायानुब्रू३हि,** इति होतारं प्रेष्येत् ।

होता- **महाँ इन्द्रोय ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधो३म् ।**

अध्वर्युः- **मा भेर्मा.... मामा हिꣳ सीः ।** इति मन्त्रेण शृतस्य (प्रातर्दोहस्य) मध्यात् स्रुवेणादाय तेनैवमन्त्रेण पूर्वार्धाद्द्वितीयमवदाय (पञ्चावत्तिनः पश्चार्धात् तृतीयमवादाय) प्रातर्दोहवदेव तेनैव मन्त्रेण दध्नः मध्यात् पूर्वार्धात् द्विरवदाय अवत्तमभिघार्य हविप्रत्यभिघार्य (पञ्चावत्तिनः तृतीयमवदाय) दक्षिणातिक्रम्योदङ्मुखः तिष्ठन् आश्राव्य प्रत्याश्राविते **महेन्द्रं यज** इति होतारं संप्रेष्येत् ।

होता- **ये ३ यजामहे महेन्द्रं भुवस्त्वमिन्द्र ब्रह्मणा महान्भुवो विश्वेषु सवनेषु यज्ञियः। भुवो नृँश्च्यौत्नौ विश्वस्मिन्भरे ज्योष्ठश्च मन्त्रो विश्वचर्षणा३इ वौ३षट् ।**

अध्वर्युः- होत्रा **वौषडित्युक्ते** स्रुच्याघारस्योपरि उपांशुयागसन्निहितं जुहुयात्

यजमानः- **महेन्द्रायेदं न मम,** इति त्यागं कृत्वा **महेन्द्रस्याहं देवयज्यया जेमनं महिमानं गमेयम् ।** इति माहेन्द्रं सान्नायमनुमन्त्रयेत ।

अध्वर्युः- इन्द्रपक्षेऽपि महेन्द्रवदेव शृतस्य दध्नः चावदाय **इन्द्राया३नुब्रू३हि** इति होतारं प्रेष्येत

होता- **ऐन्द्र सानसिं रयिं सजित्वानं सदासहम् । वर्षिष्ठमूतयेभरो३म् ।**

अध्वर्युः- दक्षिणातिक्रम्योदङ्मुखस्तिष्ठन् आश्राव्य प्रत्याश्राविते **इन्द्रं यज** इति सम्प्रेष्येत् ।

होता- **ये३ यजामह इन्द्रं प्रससाहिषे पुरूहूत शत्रून्ज्येष्ठस्ते शुष्म इहराति रस्तु । इन्द्राभर दक्षिणेना वसूनि प्रति सिन्धूनामसि रेवतीनां ३ वौ३ षट् ।**

अध्वर्युः- महेन्द्रवदेव जुहुयात् ।

यजमानः- **इन्द्रायेदं न मम । इन्द्रस्या हंदेव यज्यया जेमानं महिमानं गमेयम् ।**

असन्नयतस्तु- ऐन्द्राग्न एव सर्वेषां भवति

अध्वर्युः- प्रत्याक्रम्य ऐन्द्राग्नपुरोडाषस्यअपरार्धादवद्यन् पुरोडाषोपस्थानादि समानम् । **इन्द्राग्निभ्यामनुब्रूहि३** इति होतारं संप्रेष्येत् ।

होता- **इन्द्राग्नी अवसागतमस्मभ्यं चर्षणीसहा । मानो दुःशंसईपतो३म् ।**

अध्वर्युः- दक्षिणातिक्रभ्योदङ्मुखस्थित्वा आश्राव्य-प्रत्याश्राविते **इन्द्रीग्नी यज** इति संप्रेष्येत् ।

होता- **ये३यजामह इन्द्राग्नी गीर्भिविप्रः प्रमति मिच्छमान ईट्टे रयिं यशसंपूर्व भाजम्। इन्द्राग्नीवृत्रहणा सुवज्रा प्रनो नव्येभिस्तिरतं देष्णौ३ वौ३ षट् ।**

अध्वर्युः- अग्नीषोमीयवदेव जुहुयात् ।

यजमानः- **इन्द्राग्निभ्यामिदं न मम** इति त्यागं कृत्वा **इन्द्राग्नयोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम्** इति हुतमनु मन्त्रयेत् ।

अध्वर्युः- प्रत्याक्रम्य स्वासन उपविश्य **अथस्विष्टकृत्** जुहूमुपस्तीर्य दक्षिणस्य पुरोडारस्योत्तरार्धात् सकृद वद्यन् **अग्नये स्विष्टकृतेऽनुब्रू३ हि,** इति पुरोनुवाक्यायै होतारं संप्रेषयेत् ।

होता- **पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ॠतूँ ॠतुपते यजेह । ये दैव्या ॠत्विजस्तेभिरग्ने त्वं होतृणामस्यायजिष्ठो३म् ।** इति पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- सकृदङ्गुष्ठपर्वमात्रादधिकमवदाय सकृध्रौवाज्यमवदाय सर्वेषाꣳ हविषामुत्तरा- र्धात्सकृत्सकृत्स्विष्टकृते प्रधानावादानाद्भूयिष्ठमवदाय द्विरभिघार्य न हविः प्रत्यनक्ति। पञ्चावत्तिनां उत्तराधदिव द्विरवदानम् । अवत्ते स्विष्टकृति ध्रौवाज्यात् पार्वणौ जुहोति **अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । सा नो दोहताꣳसुवीर्यꣳ रायस्पोषꣳ सहस्रिणम् । अपानाय सुराधसेऽमावास्यायै स्वाहा,** इति **अमावास्यायाम्** जुहुयात् । **ॠषभं वाजिनं वयं पूर्णमासं यमहे । सनो दोहताꣳ सुवीर्यꣳ रायास्पोषꣳ सहस्रिणम् । प्राणाय सुरधसे पूर्णमासाय स्वाहा ।।** इति, पौर्णमास्यां जुहुया त् ।

यजमानः- **अमावास्याया** इदं न मम, इति त्यागं कुर्यात् । **पूर्णमासायेदं न मम,** इति यथालिगं त्यागं कुर्यात्।

अध्वर्युः- **अत्याक्रम्य - आश्राव्य प्रत्याश्राविते अग्निꣳ स्विष्टकृतं यज ।** इति याज्यायै होतारं संप्रेषयेत् ।

होता- **ये ३ यजामहेऽग्निं स्विटकृतमायाळग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाळग्नेः प्रिया धामान्ययाड्** (उपांशु) **विष्णोः** (उच्चैः) **प्रिया धामान्ययाळ्महेन्द्रस्य प्रिया धामान्ययाड्देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु**

**सो अध्वरा जतवेदा जुषतां हविरग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा । ऋता यजासि महिना वियद्भूर्हव्या वह यविष्ट या ते अद्या३ वौ ३ षट्** इति वषट्कुर्यात् । अयाट्-प्रियाधा मान्योमध्ये दर्शे पूर्णमास्यां च आवाहनक्रमेण षष्ठ्या विभक्त्या देवतानामादेशं कुर्यात् । (ये३ यजामहेऽग्निं स्विष्टकृतमिति याज्यां वौषडित्यन्तामनुच्छ्वसन्नेव पठेत् । उचछ्वसन्नेव पिपठिषेच्चेदर्धर्चे यज्वेत्यन्तं उच्छ्वसन्नेव पठेत् । नान्यत्रोच्छ्वासः कर्तव्यः)।

अध्वर्युः- होत्रा वौषडित्युक्ते-अग्नेरुत्तरार्धपूर्वार्धे हुत्वाऽऽज्यशेषमन्ववस्रावयेत् ।

यजमानः- **अग्नये स्विष्टकृत इदं न मम,** इति त्यागं कृत्वा **अग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयम्** । इति सौविष्टकृतमनुमत्रयेत ।

अध्वर्युः- उदङ्त्याक्रम्य जुह्वामप आनीय संक्षलनमन्तत परिधि निनयति । **वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳ शतधारमेतम् । स नः पितरं पितामहं प्रतितामहꣳ स्वर्गे लोके गच्छतु पिन्वमानो विभर्तु स्वाहा** इति ।

यजमानः- **अग्नये वैश्वानराय इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः - जुहूं प्रक्षाल्य निष्प्याद्भिःपूरयित्वा बहिः परिधि निनयति। **इमꣳसमुद्रꣳशतधार उत्संव्यच्यमानं भुवनस्य मध्ये । घृतं दुहाना मदितिं जनायाग्नेमाहिꣳ सीः परमेव्योमन् ।।**

यजमनः - **अग्नय इदं नमम** इति त्यागं कुर्यात् ।

अध्वर्युः - औपभृतमाज्यं सर्वं जुहामानीय यथायतन ꣳ सृचौ सादयित्वा प्रशित्रहरण मादाय प्रशित्रपात्रमुपस्ततीर्याऽऽग्नेयस्य पुरोडाशस्य उत्तरार्धा द्यवमात्रं अवद्यति । **अज्यायो यवमात्रादाव्याधात्कृत्यतामिदम् । मारूरुपाम यज्ञस्य शुद्धꣳ स्विष्टमिदꣳ हविः ।।** प्रशित्रं सुक्दण्डेनाभिघारयति ।

यजमानः- **अग्निर्मा दुरिष्टात्पातु सविताघशꣳ सात्** । इति प्रशित्रमावदीयमानमनुमन्त्रयेत ।

अध्वर्युः- अवत्तं प्रशित्रं प्रणीतानां पश्चात्सादयित्वा स्रुवदण्डंमद्भिः सꣳस्पृष्य इडापात्रमन्तवैदि निधाय तास्मिन्नाज्यस्थाल्याज्येनोपस्तीर्य - दक्षिणपुरोडापस्य त्वरुज्य दक्षिणार्धा ।

**अवदधाति मनुनादृष्टांघृतपदींमित्रीवरुणसमीरिताम् । दक्षिणार्धादसंभिंदन्नव-द्याम्येकतोमुखाम् ।।** संभिद्यतूर्ष्णीं-द्वितीयमवदाय दक्षिणस्यैव पुरोडाषस्य पूर्वाधाच्च यजमानभागं व्यङ्गुलं त्र्यंगुलं चतुरंगुल परिमितं वा अवदाय आज्येन संतर्प्य अग्रेण ध्रुवां निदधाति ।

यजमानः - स्वभागमवदीयमानानुमन्त्रयते - **योमेति दूरे रतियतीयतितमेतेन जेषमिति ।**

अध्वर्युः - तूर्ष्णीं ध्रौवाज्यात् द्विरवदाय एवं प्रकारेण सर्वेपां हविषःसकाशात् द्विरवदाय । (सौविष्टकृतावदानादैडावदानं ज्यायः कार्यम् ।) स्रुवेण होतुरङ्गुल्याः प्रदेशिन्याः पर्वणी अञ्ज्यात् ।

होता- **वाचस्पतिना ते हुतस्येषे प्रणाय प्रश्नामि।** इत्युत्तरपर्वलेपमुत्तरे, ओष्टे अभ्यात्मन्निमृज्य। **मानसस्पतिना ते हुतस्योर्जेऽपानाय प्रश्नामि,** इति अधरोष्टे निमृज्योदकं स्पृस्ट्वाञ्जलिनेळां प्रतिगृह्य सव्ये पाणौ कृत्वा पश्चादिडाया उदगङ्गुलिं पाणिमुपधायावान्तरेळामवदापयीताध्वर्युम् ।

अध्वर्युः- होतुः पुरस्तात्प्रत्यङ्मुख असीन उपस्प्टोदकस्य होतुर्हस्ते इडागताज्यलेपादुपस्तीर्यावान्तरे ळामवदायावदध्यात् । इडागाताज्यलेपादभिघारणं कुर्यत् । पञ्चावत्तिनां द्विरभिघारणं कुर्यात् ।

यजमानः- **सुरूपवर्षवर्ण एहीमान्भद्रान्दुर्याः अभ्येहि मामनुव्रतान्यु शीर्षाणि मृड्ढ मृड एह्यादित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टि तेऽशीयोपहूत उपहवं तेऽशीय ।** इतीडांहोतुराह्वि माणामुपहयते ।

होता- अङ्गुल्यङ्गुष्टयोर्मध्येन प्रदेशेन स्वयमिडाया द्वितीयं अवान्तरेडामादधीत । प्रत्यालब्धामङ्गुष्टेनभिसंगृह्य प्रत्यहृत्यङ्गुलीरमुष्टिं कुत्वा दक्षिणत इळां परीगृह्यास्यमितां प्रणमंमितां वा कृत्वा **इळोपडूता सह दिवा वृहताऽऽदित्येनोपास्मॉं इळा ह्वयतां सह दिवा वृहताऽऽदित्येनेळोपहूता । सहान्तिरिक्षेण वामदेव्येन वायुनेळो पास्मॉं इळाह्व यतां सहन्तरिक्षेण वामदेव्येन वायुनेळोपहुता । सह पृथिव्या रथंतरेणग्निनोपाम्मॉं इळाह्वयतां सह पृथिव्या रथंतरेणाग्निना । उपहूता गावः सहाशिर उप मां गावः सह शिराह्वयन्तामुपहूता धेनुः सह ऋपभोप मां धेनुः सह ऋपभाह्वयतामु हूता गौर्घृपद्युपमांगौर्घृतपदीह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतरोह्वयन्ता तामपहूताः सखाभक्ष**

**उप मां सखभक्षो ह्व यंतामुपहूतेळा वृष्टिरुपमामिळावृष्टि ह्वयताम्** इत्युपांशु **इळोपहूतोपहूतेळोपासामाँ इळा ह्वयतामिळोपहूता । मानवी घृत पदी मैत्रावरुणी ब्रह्मदेवकृतमुपहुतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमावान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे। उपहतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तमिति तस्मिन्नुपहूतः ।** इत्युच्चैरिळा मुपह्वयीत । अध्वयुर्यजमानाग्नीन्ध्राः उपहूयमानां इडां अन्वारभेयाताम् ।

अध्वर्युः- दैव्या अध्वर्यव उपहूता इति होतुर्वाक्यमभिज्ञाय शिष्टं दसिणं पुरोडापं चतुर्धा कृत्वा वर्हषि निदधाति ।

यजमानः- **सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञोदिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान् राय उत यज्ञाः संचन्तामस्मसु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी** उपहूतोयं यजमन इति श्रुत्वा होतारमीक्षिमाणा गोरुपाया इडाया वायुवत्सत्वेन ध्यायेत् ।। उपहूतायामध्वर्युर्यजमानौ उपहूतपशुमानसानीति ब्रूयास्ताम् ।

**अध्वर्युः-** इडायाः पञ्चमं भागंद्वेधाकृत्वा अग्नीधे षडवत्तं ददाति ।। उपस्तीर्य प्रथमं, ददाति । पुनरुपस्तीर्य द्वितीयं ददाति पुनराभिघारयति एवं षडवत्तं सम्पादयति ।। अवशिष्टं-भागामिडायाः चतुर्विभज्य होत्रे ब्रह्मणे च तत्तद्भागं दत्वा स्वं भागमादाय चतुर्थं भार्गं यजमानाय ददाति । यजमानपञ्चमा इडां प्राश्नीयुः ।

**यजमानः** - होत्रावान्तरेडां प्रश्यमानोमनुमन्त्रयेत **जुष्टिरसि जुषस्व नो जुष्टा नोऽसि जुष्टिं ते गमेयम् ।**

होता- **इळे भागं जुषस्व नः पिन्वगा जिन्वार्वतो रायस्पोषस्येशिषे तस्य नो रस्व । तस्य नो दास्तस्यस्ते भागमशीमहि । सर्वात्मानः सर्वतनवः सर्ववीराः सर्वपूरुषाः । सर्वपुरुषा** इति वा । अवान्तरेडां प्रश्याऽऽचम्य तूष्णीमिडाभागं भक्षणार्थं गृहीतं प्राश्याऽऽचम्य वाग्यत आस्त आमार्जनात् ।

**आश्वलायनब्रह्मा-** तूष्णीमिडाभागं प्रश्यऽऽचम्य वाग्यत आस्त आ मार्जनात् ।

अध्वर्युयजमानाग्नीध्राः- **इडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणः**

**स्याम सर्वात्मान सर्वगणाः** ।। इतीडायाः स्वस्वभागं प्रश्याऽऽचम्य वाग्यता असत आ मार्जनात् । मन्त्रावृत्तिः प्रतिपूरुषम्

**अध्वर्युग्नीघ्रौ वर्हिषि तूष्णींमार्जयतः**

**यजमान-** **मनो ज्योतिर्जषतामाज्यं विच्छिन्नं यज्ञ९ समिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ।** इत्यन्तर्वैदि स्थिते प्रस्तरे मार्जयते । (मार्जनं नामान्तर्वद्यवस्थिते प्रस्तरे जलमासिच्य तस्याधस्तद्धस्तेन जलं गृहीत्वा शिरस्यानयनम्।) मन्त्रावृत्तिश्च प्रतिपूरुषम् । होतृव्रह्माणावेवंमार्जयेथाताम् । आहवनीयपरिस्तरणैरञ्जलि-मुदकाधाराणसमर्थं कृत्वाऽन्येन केनचित्परिकर्मिणाऽपामासेचनम्। बोधायनीय व्रह्मणस्तु अध्वयुवन्मार्जनम् ।

**अध्वर्युः-** आग्रीधं संप्रेष्यति **व्रह्मणे प्राशीत्रं परिहरेति ।**

**अग्निध्रः-** उदकमण्डलुं हस्तेगृहीत्वा प्राशित्रमग्रेणहवनीयं गत्वा व्रह्मणे परिहरति ।

**आश्वलायनव्रह्मा-** **मित्रस्य त्वा चक्षुषा प्रतीक्षे । इति प्रशित्रमाह्नियमाणमीक्षित्वा देवस्य त्वा सवितुः प्रसवेऽश्विऽनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृहामि ।** इति तदञ्जलिना प्रतिगृह्य **पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थे** इत्यन्तर्वेदि कुशेषु प्रग्दण्डं निधायाङ्गुष्टोपकनिष्ठिकाभ्यां गृहीत्वा **अग्नेष्टाऽऽस्येन प्रश्नामि बृहस्पतेर्मुखेन ।** इति दन्तैरपीडयन्प्रा श्याऽऽचम्य **सत्येन त्वाऽभिजिघर्मि या अप्स्वन्तर्देवतास्ता इदं शामयन्तु चक्षुः क्षेत्रं प्रणान्ये मा हिंसीः,** इत्यपः पीत्वाऽऽचम्य **इन्द्रस्य त्वा जठरे दधामि** इति नाभिमालभ्य प्रशित्रहरणं प्रक्षाल्य प्रक्षालितेनानेन प्रशित्रहरणेनाऽऽत्मान-मभिमुखेन हस्तेन च तथाभूतेनाऽऽत्मनः पुरस्तात्अपः सिञ्चेत्।

**वोद्यायनीयव्रह्मा-** प्रशित्रमवदीयमाने **आ प्रसवात्परिहरन्त्यस्मा** तदिति जपति । **ऋतस्य पथा पर्येहि,** अग्रेणाऽऽहवनीयं परिह्नियमाणं प्रेक्ष्यति **सूर्यस्य स्वा चक्षुषा प्रतिपश्यामि, उभाभ्यां** हस्ताभ्यां प्रतिगृह्वाति **देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रति गृह्वामि** इति प्रतिगृह्य **पृथिव्यास्त्वा नाभौ सादयामी ति** इत्यन्तर्वेदि व्यूह्य तृणानि प्राग्दण्ड९ सादयित्वा **सुपर्णस्यत्वा गरूत्मत चक्षुपावेक्ष्ये** इत्यङ्गुष्टेनोमहानाम्या चाङ्गुल्याऽऽदाय अतिहाय च स्वामनात् अग्नेष्टवाऽऽस्येन प्राश्नामि इति प्राश्याचम्य सहाभ्दिरवगिरति **व्राह्मणस्योदरेण व्रहस्पते व्रह्मण इति ।** अद्भिर्मार्जयि त्वा प्राणान्समृशते **वाङ्म आसन्** इति मुखम् अभिमृश्य **नसोः प्राणः,**

इति नासिके अभिमृश्य **अक्ष्णोःचक्षुः,** इति चक्षुषी अभिमृश्य **कर्णयोःश्रोत्रं** इति श्रोत्रे अभिमृष्य, **बाह्वोर्बलं** इति बाहू अभिमृष्य, **ऊर्वोरोजः** इति ऊरू अभिमृष्य **अरिष्टा विश्वान्यङ्गानि तनूः,** स्तनुवो मे मह अस्तु मा माहिꣳ सीरिति मयि प्राणः मयि प्राणरितिवा । आहृतं ब्रहाभागं प्रशित्रहरणे निदधाति ।

यजमानः- **व्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोपमदसत्** विभजति **इदं व्रह्मणः, इदꣳ होतुः, इदमध्वर्योः, इदमाग्नीधः** इति ।

अध्वर्यु- **इदं यजमानस्य,** इति यजमानभागं निर्दिश्य आऽऽग्नीध्रभागं द्वैधा कृत्वाग्नीधेषडवत्तं ददाति पूर्ववत् । कस्मिंचित्पात्रे द्विरुपस्तीर्य द्विराधाय द्विरभिघार्य तत्पात्रमाग्नीधे प्रयच्छेदिति । यथास्थानमासीनाम्यां ब्रह्मयजमानाम्यां तयोर्भागौ वेदेन हृत्वा प्रयच्छेत्। ब्रह्मणे भागद्वयं । कृत्वा ददति ।

ब्रह्मा- दत्तं स्वभागं प्रशित्रहरणे निदध्यात् ।

यजमानः- प्रशित्रहरणस्य पश्चात्कुशेषु स्वभागं निदध्यात् ।

अध्वर्युः- स्रुवेण होतुर्भागं होत्रे प्रयच्छेत्तथा स्वभागं जुह्वा स्वयं गृह्वीयात्।

होता- तूष्णीं भक्षयित्वाऽऽचामेत् ।

अध्वर्युः- **अन्तरिक्षस्य भागोऽसि,** इति स्वभागं प्राश्याऽऽचम्य दाक्षिणाग्नावन्वाहार्य महान्तमपरिमितमोदनं पचेत्क्षीरे पचेदित्येके।

आश्वलायनव्रह्मा- दक्षिणाग्नौ स्थितमन्वाहार्यं गत्वा **प्रजापतेर्भगोऽस्यूर्जस्वान्पयस्वानक्षितिरसि मा मे क्षेष्टा अस्मिंश्च लोकेऽमुष्मिंश्च ।** इत्यन्वाहार्यमवेक्ष्य **प्राणापानौ मे पाहि कामय त्वा,** इत्यस्पृशन्नन्वाहार्यमवघ्रायाङ्गुष्ठोपकनिष्ठिकाभ्यां पुलककलामात्र-मन्वाहार्याद्गृहीत्वा प्राशित्रहरणस्थस्वभागे निदध्यात् ।

वौधामनीयव्रह्मा- **व्रह्मन् ब्रह्माऽसि नमस्ते व्रह्मन् व्रह्मणे हुताद्य सवौ महयं भवती रहुतो मह्यꣳ शिवो भव । इत्यन्त पहि माम्** अथास्य यवमात्रमवदाय प्राशित्रहरणे निददाति **श्रीरस्येहि मामभ्य न्नवान्ननादो भूयासमिति** वेद्यामन्वााहार्यमासन्नमभिमृशेत्।

अध्वर्युः- अन्वाहार्यमभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यासादयेत् ।

यजमानः- **प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वापयस्वान् प्राणापानो मे पाहि समान व्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा मा मेक्षिष्टा अमुत्रामुष्मिल्लोके।**

**इय॒ꣳस्थाल्यमृतस्य पूर्णा सहस्रधार** इत्यन्वाहार्यमासन्नमभिमृशेत् । **अयं व ओदनः, यथाभागं प्रतिगृह्णीध्वम्** इति तेभ्योऽन्वाहार्यं दद्यात् ।

**ऋत्विजः-** दक्षिणां प्रतिग्रहीष्यन्तः सप्तदशकृत्वो वायोरन्तराकर्षणरुपं निःश्वासं कुर्युः ।

अध्वर्युराग्नीध्रबोधायनब्रह्मा च- **देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि । राजा त्वा वरुणो नयतु देवि दक्षिणे वाचैन्नं तेनामृतत्वमश्याम्। वयो दात्रे भूयान्मयो मह्यमस्तु प्रतिगृहीत्रे । क इदं कस्मा अदात् । कामः कामाय । कामो दाता । कामः प्रतिग्रहीता । कामꣳ समुद्रमाविश । कामे न त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते कामं दक्षिणा । उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु ।** इत्यन्वाहार्यं प्रतिगृह्णीयुः

होतृब्रह्माणौ- **क इदं कस्मा अदात्कामः कामायादात्कामो दाता कामः प्रतिग्रहीता कामं समुद्रमाविश कामेन त्वा प्रतिगृहामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु ।** इत्यन्वाहार्यं प्रतीगृह्णीयाताम् ।

अध्वर्युः- हविःशेषानुदगुद्वास्य **ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीत्परिधीꣳश्चाग्निं च सकृत्सकृत्संमृड्ढि** । इति ब्रह्माणमग्नीधं च संप्रैष्येत् ।

आश्वलायनब्रह्मा- **बृहस्पतिर्ब्रह्मा ब्रह्मसदन अशिष्ट बृहस्पते यज्ञमजूगुपः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि । भूर्भुवः स्वर्हबृहस्पतिप्रसूतः** । इति जपित्वा, ॐ **३ प्रतिष्ठ,** इत्यतिसृजेत् ।

बोधायनीयब्रह्मा-**देव सवितरेतत्ते प्राह तत्प्रच सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पहि इत्युपांशूक्त्वा,** ॐ ३ प्रतिष्ठ, इत्युच्चैरनुजानीयात् ।

आग्नीध्रः- पूर्ववत्परिधीन्त्सकृत्सकृत्संमृज्य, **अग्ने वाजजिद्वाजं त्वा स सृवाꣳसं वाजं जिगिवाꣳसं वाजिनं वाजजितं वाजाजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय** । इति सकृदग्निं प्रांचं संमृज्यात् । इध्मसंन्नहनानि विस्रस्याद्भिः सꣳस्पृश्य **यो भूतानामधिपती रुद्रस्तंन्तिचरोवृषा । पशूनस्माकं मा हिꣳसीरेतदस्तु हुतं तव स्वाहा ।** इत्यग्नौ प्रहृत्येध्मसंनहनान्यप उपस्पृशेत् ।

**यजमानः-** **भूतानामधिपतये रुद्राय तन्तिचराय वृष्ण इदं न मम,** इति त्यागंकृत्वोभावप उपस्पृशतः

## अथानूयाजाः

**अध्वर्युः-** जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्तोऽदङ्मुखः स्थित्वा **ओ३श्रावय** इत्याग्नीध्रं संप्रैष्येत्।

**आग्रीध्रः-** **अस्तु श्रौ३षट्,** इति पूर्ववत्प्रत्याश्रावयेत् ।

**अध्वर्युः-** **देवा३न् यज,** इति होतारं संप्रैष्येत् ।

**होता-** **देवं बर्हिर्वसुवने वसुधेयस्य वैतू ३ वौ ३ षट्,**

**अध्वर्युः-** होत्रा **वौषडित्युक्ते** आघारसंभेदाग्रदेशपूर्वभागे समिधि प्रथममनुयाजं जुहुयात् ।

**यजमानः-** **देवाय बर्हिष इदं न मम** इति त्यागं कृत्वा **बर्हिषोऽहं देवयज्यया प्रजावान् भूयासम्** । इति हुतमनुयाजमनुमन्त्रयेत ।

**अध्वर्युः-** आश्राव्य प्रत्याश्राविते ।

**अध्वर्युः-** **यज,** इति होतारं द्वितीयानुयाजार्थं संप्रैष्येत् ।

**होता-** **देवो नराशंसो वसुवने वसुधेयस्य वेतू३ वौ३षट्,** इति ।

**अध्वर्युः-** होत्रा **वौषडित्युक्ते,** आघारसंभेदस्य पूर्वभागे प्रथमानुयाजात्प्रत्यक्मध्येसमिधि द्वितायानुयाजं जुहयात् ।

**यजमानः-** **देवाय नराशंसाय इदं न मम । नराशꣳसस्याहं देवयज्यया पशुमान्भूयासम्,** इति हुतमनुयाजमनुमन्त्रयेत ।

**अध्वर्युः-** आश्राव्य प्रत्याश्रविते । **यज,** इति होतारं तृतीयानुयाजार्थं संप्रैष्येत् ।

**होता-** **देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्ने यान्देवानयाड्याँ अपि प्रेर्येते होत्रे अमत्सता ताँ ससनुषीं होत्रा देवंगमां दिवि देवेपु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमोवाके वीही३ वौ३षट्,** इति (अमत्सतेत्यत्रावसायानवसाय वा यजेत) ।

**अध्वर्युः-** होत्रा **वौपडित्युक्ते** समिधोमूलमारभ्याग्रान्तं सन्ततं जुहुयात् ।

**यजमानः-** **देवायाग्नय स्विप्टकृत इदं न मम** । इति त्यागं कृत्वा, **अग्नेः स्विष्टकृतोऽहं**

**देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयम्** । इति हुतमनुयाजमनुमन्त्रयेत ।

अध्वर्युः- प्रत्याक्रम्याऽऽयतने स्रुचौ सादयित्वा **अध्वर्युयजमानौ व्यूहतः** ।। दक्षिण हस्तेन जूहूं गृह्णीतः । **वाजस्य मा प्रसवेनो दृगृभेणोदग्रभीत्** इति । सव्येन हस्तेनोपभृतं सप्रस्तरां जुहूं किंचिदुद्यम्य **अथासपत्नाः इन्द्रो मे निग्राभेणाधराः अकः** । इति दक्षिण हस्तेन जुहूं प्राचीं प्रेरयत आदक्षिणादंसात **उदुग्रभं च** जुहूं **निग्राभं च ब्रह्म देवा अवीवृधन्** इति सव्येन हस्तेनोपभृतं प्रत्यगग्रं उत्तरत श्रोणिपर्यन्तं **अथा सपत्नानिन्द्राग्नी मे विषूचीनान्व्यस्यताम्** ।

ब्रह्माः - स्रुचव्यूह्यमाने उदञ्चं नीयमाने अनुमन्त्रयते **यज्ञोदिवः रोहतु यज्ञो दिवं गच्छतु यो देवयानःपन्थास्तेन यज्ञो देवा अप्येतु** इति ।।

अध्वर्युः- **वसुभ्यस्त्वा** । इति जुह्वाज्यलेपेन मध्यमपरिध्येकदेशमाज्ज्यात् ।

यजमानः- **वसुभ्य इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- **रुद्रेभ्यस्त्वा** । इति जुह्वाज्यलेपेन दक्षिणपरिध्येकदेशमज्ज्यात् ।

यजमानः- **रुद्रेभ्य इदं न मम** । इति त्यागं कुर्यात् ।

अध्वर्युः- **आदित्येभ्यस्त्वा** । इति जुह्वाज्यलेपेनोत्तरपरिध्येकदेशमज्ज्यात्।

यजमानः- **आदित्येभ्य इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- उपभृतमद्भिः संक्षालयित्वा याथायतनंस्रुक्स्रुवौ सादयित्वा **संजानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवताम्** । सविधृती **अक्तः रिहाणा** इति प्रस्तराग्रं जुह्वामङ्क्त्वा **वियन्तु वयः** । इत्युपभृति प्रस्तरमध्यमङ्क्वा । **प्रजां योनिं मा निर्मृक्षम्** । इति ध्रुवायां प्रस्तरमूलमज्ज्यात् । **आयुषे त्वा** । इत्यक्तस्य प्रस्तरस्य तृणमपादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां पाणिभ्यां **सह शाखया** प्रस्तरं गृहीत्वा जुह्वां प्रतिष्ठाप्याऽऽसीनः **ओ३श्रा३वय** । इत्याग्नीध्रं संप्रैष्येत् ।

आग्नीध्रः- **अस्तु श्रौषट्,** इति पूर्ववत्प्रत्याश्रावयेत् ।

अध्वर्युः- इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रू३हि, इतिं होतारं संप्रैष्येत् ।

होता- इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोऽच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्यो रोमन्वती तेऽस्मिन्यज्ञे यजमान द्यावापृथिवीस्ताम् । शंगयीर्जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ। वृष्टिद्यावा रीत्यापा शंभुवौ मयोभूवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदि इत्यवसाय अग्निरिदं हविरजुषतावीवधृत महो ज्यायोऽकृत । सोम इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । (उपांशु) विष्णुः (उच्चैः) इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । महेन्द्र इद्र वा इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । इन्द्रग्री इदं..... षेता मवीवृधोता क्रताॅ मित्यसन्नयत देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽकृत । अस्यामृधेध्दोत्रायां देवंगमायामाशास्तेऽयं यजमानो दत्तात्रेयशर्मा हस्तः । इति यजमाननाम नक्षत्रनाम च निर्दिश्य,

पौर्णमास्याम्- अग्निषोमाविदं हविरजुषेतामवीवृधेतां महो जयायोऽक्रातम् । इन्द्रो वैमृध इदं हविरजुषतावीवृधत महो ज्यायोऽकृत, इत्येतदुपांशुयाजदेवतायाः कीर्तनानन्तरमुक्त्वा देवा आज्यपा इत्यादि समानम् । आयुरशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करण माशास्ते दिव्यं धामाऽऽशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्योऽवनते वयमग्नेर्मानुपाः। इष्टं च वित्तं चो भे चनो द्यावापृथिवी अंहसस्पातामेह गातिवमस्येदं नमो देवेभ्यः । इति ब्रूयात् ।

अध्वर्युः- अनूच्यमाने सूक्तवाके, अग्निरिदः हविरजुषतेति होतुरभिज्ञाय मुञ्जितीर्वाचयति अग्नय इदं न मम । अग्नेरहमुज्ञितिमनूज्ञेपम् । सोमायेदं न मम । सोमस्याहमुज्ञिति-मनूज्ञेषम् । अग्नय इदं न मम । अग्नेरहमुज्ञितिमनूज्ञेपम् । विष्णव इदं न मम । महेन्द्रा येदं न मम । महेन्द्रस्याहमुज्ञितिमनूज्ञेपम् । देवेभ्य आज्यपेभ्य इदं न मम अग्नये स्विष्ट कृत इदं न मम । अग्नेःस्विष्ट कृतोऽह मुज्ञिति मनू ज्ञेषम् । अमावास्यायाममसोसमयाजिनः, विष्णव इदं न मम, इत्यनन्तरम् ।

**इन्द्राग्निभ्यामिदं न मम । इन्द्रग्न्योहमुज्जितिमनूज्ञेषम् ।** ततो देवभ्य आज्यपेभ्यः, इत्यादि समानम् ।

पौर्णमास्याम्- विष्णव इदं न मम । ततः -----**अग्नीषोमाभ्यामिदं न मम । अग्नीषोमयोरह-मुज्ञितिमनुज्ञेषम् । इन्द्राय वैमृधायेदं न मम इन्द्रस्य वैमृधस्याहमुज्ज्ञि तिम नूज्येषम् ततोदेवभ्य अज्य** इत्यादि समानम् । आशास्तेयं यजमानइत्यभिज्ञाय, **एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषम् । आप्यायन्तामाप ओषधयो मरुतं पृषतपस्यदिवं गच्छ ततो नौ वृष्टिमेर य।।**

अध्वर्युः- होत्रादेवेभ्य इत्यभिज्ञाय **आप्यायन्तामाप ओष धयो मरुतां पृशतयस्थदिवंगच्छ ततोनो वृष्टि मेरय** इति सह शाखयाहवनीयेय प्रस्तरं प्रहरति ।। ज्वालाया उपरि प्रस्तर मूलं प्रागायतं ज्वालानतिक्रान्तोग्रं दीपयेत **अग्नीत इति आग्रीध्रमीक्षते ।**

आग्नीध्रः- **संश्वदस्व,** इत्यध्वर्युमाह ।

अध्वर्युः- **अगानग्नीत्,** इत्याग्नीध्रं पृच्छेत् ।

आग्नीध्रः- **अगन्म** इत्यंध्वर्युमाह ।

अध्वर्युः- **श्रा३वय,** इत्याग्नीध्रमाह ।

आग्नीध्रः- **श्रै३षट्** इत्यध्वर्यूमाह ।

अध्वर्युः- प्रस्तरादपनीतं तृणं दर्शयन् इदं ब्रू ३ हि ।

आग्रीध्रः- अनुप्रहर इति

अध्वर्यः- तृणमभिप्रहत्य **स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शयोब्रू३हि** इति होतारं संप्रैष्येत् ।

होता- **तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं जतुष्पदे ।** इति ब्रूयात् ।

अध्वर्यु- उत्थायाहवनीयमुपतिष्ठते - **आयुष्मा अग्नेस्यायुर्मे पहि चक्षुष्पा अग्ने सि चक्षुर्मेपाहि** इति भूमिमभिमृशति **ध्रुवासि** इति अनुच्यमाने शंयुवाके **यं परिधिं पर्यधत्था अग्ने**

देव पणिभिर्वीयमाणः । तं तएत तमनु जोषं भरामि नेदेष त्वदपचेतय तै। इति मध्यमं परिधिमाहवनीये प्रहृत्य **यज्ञस्य पाथ उप समितम्** इति दक्षिणोत्तरौ परिधी युगपत्प्रहृत्य उत्तरार्ध्यस्य परिधेरग्रमङ्गारेषूपगूहेत् ।

यजमानः- **वि ते मुञ्चामि रशना वि रश्मीन्वियोक्त्रा यानि परिचर्तनानि । धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधां देवतासु** । इति परिधिषु विमुच्यमानेषु जपित्वा **अग्नय इदं न मम,** इति त्यागं कृत्वा **विष्णोः शंयोरहं देव यज्यया यज्ञेन प्रतिष्ठां गमेयम्** । इति शंय्युवाक मनुमन्त्रयते ।

अध्वर्युः- जुह्वामुपभृतोऽग्रमवधाय **सꣳस्रावभागाः स्थेषा वृहन्तः प्रस्तरेष्टा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वꣳस्वाहा ।** इति सꣳस्रावेणाभिजुहुयात् ।

यजमानः- **वसुभ्यो रुद्रेभ्य आदित्येभ्यः सꣳस्रावाभागेभ्य इदं न मम ।** इति त्यागं कुर्यात्।

ऋत्विजः- हविःशेपानत्रैव भक्षयेयुः ।

अध्वर्युः- प्रदक्षिणमावृत्योत्करे उदगग्रं स्फ्यं निधाय तस्मिन् स्रुचौ सादयति ।। **अग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरिधुर्योपातम्** इति । होत्रे वेदं प्रहादाति ।

आग्नीध्रः- स्फ्यमाज्यस्थालीमुदककमण्डलुं चाऽऽदाद्याय उत्तरेण गार्हपत्यं होत्रध्वर्योरग्रे गच्छेत् ।

अध्वर्युः- दक्षिणाज्यस्थालीꣳस्रुवां मव्येन जुहूमादाय प्रदक्षिणमावृत्य अग्रेण गार्हपत्यं दक्षिणेन पदा तिक्रम्य गार्हपत्यदक्षिणाग्न्योर्मध्ये गत्वा पश्चात् गार्हपत्यस्योपविशेत् ।

होता- **वेदोऽसि वेदो विदेय** । इति वेदं गृह्णीयात् । **उदायुपा स्वायुपोदोपधीनाँ रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अनु** । इत्युत्थायोत्तरेण गार्हपत्यं प्रत्यागच्छेत्। गत्वा ग्रर्हपत्यस्य पश्चादुपविशेत् ।

अग्नीध्रः- अपरेण गार्हपत्यमध्वर्योरुत्तरत दक्षिणाभिमुखः स्फ्यं गृहीत्वोर्ध्वज्ञुरुपविशेत् ।

अध्वर्युः- होत्रा वेदमादाय वेद उपभृतं कृत्वा तूर्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् उपांशु **सोममय अनुब्रू३हि,** इति उच्चैः (पत्नीमंयाजदेवता उपांशु इति)

होतारं संप्रेष्य पुनः स्रुवेण त्रिवारमाज्यं जुह्वां गृहीत्वा चतुर्गृहीतं संपादयेत् ।

होता- **अप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भावा वाजस्य संगथो ३ म् ।** इति उपाशुस्वरेण पुरोनुवाक्यां ब्रूयात् ।

अध्वर्युः- **आ३श्रा३वय ।** इत्यग्नीध्रं संप्रेष्येत् ।

अग्नीधः- **अस्तु श्रौ३षट्,** इति प्रत्याश्रावयेत् ।

अध्वर्युः- **सोमं यज,** इति होतारं संप्रैष्येत ।

होता- **ये३ यजमहे सोमं सं ते पयांसि समुयन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः। आप्याँयमानो अमृताय सोम दिवि श्रवां स्युत्तमानि धिष्वा३ वौ३ षट् ।** इती

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्याग्नेरुत्तरार्धे जुहूयात् ।

यजमानः- **सोमायेदं न मम ।** इति त्यागं कृत्वा **सोमस्याहं देवयज्यया सुरेता रेतो धिषीय।** इति हुतमनुमन्त्रयेत ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् **त्वष्ट्रेऽनुब्रूही,** इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **इह त्वष्टारमग्रियं विश्वरूपमुपह्वये । अस्माकमस्तु केवलो३म् ।** इति

अध्वर्युः- आश्राव्य प्रत्याश्राविते । **त्वष्टारं यज,** इति होतारं संप्रैष्येत् ।

होता- **ये३ यजामहे त्वष्टारं तन्नस्तुरीपमधपोषयित्नु देव त्वष्टर्वि रराणस्यस्व । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामा३ वौ३षट्** इति ।

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्याग्नेरुत्तरार्धे सोमाहुतेर्दक्षिणत उत्तरतो वा जुहुयात् ।

यजमानः- **त्वष्ट्र इदं न मम,** इति त्यागं कृत्वा **त्वष्टुरहं देवयज्यया पशूनाᳪरूपं पुषेयम् ।** इति हुतमनुमन्त्रयेत ।

अध्वर्युः- आहवनीयतः, गार्हपत्ये परिश्रितेऽपरिश्रिते वा तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् **देवानां पत्नीभ्योऽनुब्रू३हि,** इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नरतुजये वाजसातये । याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छतो३म् ।** इति पुरोनुवाक्यामनुब्रूयात्।

अध्वर्युः- आश्राव्य प्रत्याश्राविते **देवानां पत्नीर्यज,** इति होतारं संप्रैष्येत् ।

होता- **ये३ यजामहे देवानां पत्नीरुत ग्नाव्यन्तु देवपत्नीरिन्द्राण्यग्नय्यश्विनी राट्। आरोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनां३ वौ३षट् ।**

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्याग्नेरुत्तरार्धे जुहुयात् ।

यजमानः- **देवानां पत्नीभ्य इदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् **राकाया अनुब्रू३हि,** इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतुत्मना । सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यो३म् ।** इति पुरोनुवाक्यां ब्रूयात्।

अध्वर्युः- आश्राव्य प्रत्याश्राविते **राकां यज,** इति होतारं संप्रैष्येत् ।

होता- **ये३ यजामहे राकां यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपाऽऽगहि सहस्रपोषं सुभगे रराणा३ वौ३षट् ।**

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्ये जुहुयात् ।

यजमानः- **राकाया इदं न मम,** इति त्यागं कृत्वा **राकाया अहं देवयज्यया प्रजावान् भूयासम् ।** इत्यनुमन्त्रयेत् ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन् **सिनीवाल्या अनुब्रू३हि,** इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नो३म् ।**

अध्वर्युः- आश्राव्य प्रत्याश्राविते **सिनीवालीं यज,** इति होतारं संप्रैष्येत् ।

होता- **ये३यजामहे सिनीवालीं या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतना३ वौ३षट् ।**

अध्वर्युः- होत्रा **वौषडित्युक्ते** गार्हपत्ये जुहुयात् ।

यजमानः- **सिनीवाल्या इदं न मम,** इति त्यागं कृत्वा **सिनीवाल्या अहं देवयज्यया प्रजावान्**

**पशुमान्भूयासम्** । इत्यनुमन्त्रयेत ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेण गृहीत्वा जुह्वां गृह्णन्**कुह्वा अनुब्रू३हि**, इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **कुहूमहं सुवृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि । सा नो ददातु श्रवणं पितृणां तस्यै ते देवि हविषा विधेमो३म् ।**

अध्वर्युः- आश्रव्य, प्रत्याश्राविते । **कुहूं यज**, इति होतारं संप्रैष्येत् ।

होता- **ये३ यजामहे कुहूं कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु । सं दाशुपे किरतु भूरि वामं रायस्पोषं यजमाने दधातू३ वौ३षट् ।**

अध्वर्युः- होत्रा वौपडित्युक्ते गार्हपत्ये जुहुयात् ।

यजमानः- **कुह्वा इदं न मम**, इति त्यागं कृत्वा । **कुह्वा अहं देवयज्यया प्रजावान् भूयासम्** इत्येनुमन्त्रयेत ।

अध्वर्युः - तूष्णीमाज्यास्थाल्याज्यंगृह्णन् अनुमत्या अनुब्रू३हि इति होतारं संप्रेष्य चतुर्गृहीतं सम्पादयेत्

होताः- **अनुनोद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयो३म् ।।**

अध्वर्यु - आश्राव्य प्रत्याश्राविते **अनुमतिं यज** इति होतारंसप्रेश्येत

होताः - **ये३ यजामहे अनुमतिमन्विदनुमतेत्वंमन्यासै शंचनस्कृधि । क्रत्वेदक्षायनो- हिनु प्रणाआयूंषितारिषा३ वौ० ।।**

यजमान- **अनुमत्या इद०** इति त्यागंकृत्वा - **अनुमत्या अहं देवयज्यया प्रजावान्भूयासम्।।** इति अनुमन्त्रयेत ।।

अध्वर्युः - स्रुवाहुतीर्जुहोति - **राकायै स्वाहा** । य - **रकायाइदं** ।। अ०- **सिनीवाल्यैस्वाहा** य - **सिनीवाल्याइदं०** ।। अ०- **कुह्वै स्वाहा । य - कुह्वा इदं० ।। अ० अनुमत्यै स्वहा । य- अनुमत्या इदं० ।। अ० सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेताःस्वाहा ।**

यजमानः - **दिवि ज्योतिषे, अजराय परमात्मन इदं न मम,**

अध्वर्युः- **दश ते तनुवो यज्ञं यज्ञियास्ताः प्रीणातु यजमानो घृतेन । नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत्स्वाहा ।** इति जुहुयात् ।

यजमानः- **नारिष्ठाभ्यामिदं न मम,** इति त्यागं कूर्यात् ।

अध्वर्युः- **यं वां देवा अकल्पयन्नूर्जो भागᳪ शतक्रतू । एतद्वां तेन प्रीणानि तेन तृप्यतम ᳪ हहौ स्वाहा** ॥२॥ इति जुहुयात् ।

यजमानः- **नारिष्ठभ्यामिदं न मम,** इति त्यागं कुर्यात् ।

अध्वर्युः- तूष्णीमाज्यस्थाल्या आज्यं स्रुवेणाऽऽदाय जुह्वां गृह्णन्, **अग्नये गृहपतयेऽनुब्रू३हि,** इति होतारं संप्रेष्य चतुर्गृहीतं संपादयेत् ।

होता- **अग्निर्होता गृहपतिः स राजा विश्वा वेद जनिमा जातवेदाः । देवानामुत यो मर्त्यानां यजिष्ठः स प्रयजताममृतावो३म् ।** इति

अध्वर्युः- आश्रव्य, प्रत्याश्राविते । **अग्निं गृहपतिं यज,** इति होतारं संप्रेष्येत् ।

होता- **ये३ यजामहेऽग्निं गृहपतिं हव्यवाळग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे। सुगार्हपत्याः समिषो दिदीह्यस्मद्र्यक् संमिमीहि श्रवांसी ३ वौ३षट्,** इति

अध्वर्युः- होत्रा **वौषडित्युक्ते** सोमत्वष्ट्राहुत्योर्मध्ये ऐशान्यां जुहुयात् ।

यजमानः- **अग्नये गृहपतय इदं न मम,** इति त्यागं कृत्वा **देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासम्** । इत्यनुमन्त्रयेत ।

अध्वर्युः- अग्रेणहोतारमुत्तरतोगत्वा स्रुवेण होतुः प्रादेशिन्या उत्तमे पर्वणी अञ्ज्यात् ।

होता- **वाचस्पतिना ते हुतस्येषे प्राणाय प्राश्नामि** । इत्युत्तरपर्वलेपमुत्तर ओष्ठेऽभ्यात्म-मात्माभिमुखं पाणितलं कृत्वा निमृज्य **मनसस्पतिना ते हुतस्योर्जेऽपानाय प्राश्नमि।** इत्यधरपर्वलेपमधर ओष्ठे निमृज्योदकं स्पृष्ट्वाऽऽज्यं पाणितलेऽवदापयीत।

अध्वर्युः- उपस्पृष्टोदकस्य होतुर्हस्ते चतुर आज्यबिन्दूनिडामवद्य होतारमन्वारभेते अध्वर्युः पत्नी च

होता- **इळोपहूता सह दिवा बृहताऽऽदित्येनोपास्माँ इळा ह्वयतां सह दिवा बृहताऽऽदित्येनेळोपहूता । सहान्तरिक्षेण वामदेव्येन वायुनोपास्माँ इळा ह्वयतां**

सहान्तरिक्षेण वामदेव्येन वायुनेळोपहता। सह पृथिव्या रथंतरेणाग्निनोपास्माँ इळा ह्वयतां सह पृथिव्या रथंतरेणाग्निना । उपहूता गावः सहाशिर उप मां गावः सहाशिरा ह्वयन्तामुपहूता धेनुः सह ऋषभोप मां धेनुः सह ऋषभा ह्वयतामुपहूता गौर्घृतपद्युप मां गौर्घृतपदी ह्वयतामुपहूता दिव्याः सप्त होतार उप मां दिव्याः सप्त होतारो ह्वयन्तामुपहूतः सखा भक्ष उप मां सखा भक्षो ह्वयतामुपहूतेळा वृष्टिरुप मामिळा वृष्टिर्ह्वयताम् । इळोपहूतेळोपास्माँ इळा ह्वयतामिळोपहूता । मानवी घृतपदी मैत्रावरुणी ब्रह्मदेवकृतमुपहूतं दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः । य इमं यज्ञमवान्ये च यज्ञपतिं वर्धानुपहूते द्यावापृथिवी पूर्वजे ऋतावरी देवी देवपुत्रे । उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण इदं मे देवा हविर्जुषन्तामिति तस्मिन्नुपहूतः, इति मन्द्रेणाऽऽज्येडामुपह्वयेत ।

**यजमानः-** **अध्वर्यु अग्नीधे षड्विदून् आज्यं ददाति ।**

**होताऽऽग्नीध्रश्च-** स्वस्वहस्तस्थमाज्येडां तूष्णीं प्राश्याऽऽचामेताम् । आग्नीध्रो मार्जयते ।

**अध्वर्युः-** स्रुचि चतुर्गृहीतं गृहीत्वा आज्यस्थालीं स्रुवं स्रुचं वेदं चादाय पत्नीगार्हपत्ययोर्मध्येन नीत्वा अपसव्यं दक्षिणत एत्य दक्षिणाग्नौ प्रायश्चित्तानि जुहोति । **उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि कृष्णाजिने यत्कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति वह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहा ।**

**यजमानः-** **विश्वेभ्यो देवेभ्य इदं न मम**, इति त्यजेत् ।

**अध्वर्युः-** अपरं चतुगृहीतं गृहीत्वा । दक्षिणाग्नाविध्मप्रव्रश्चनान्यभ्याधाय फलीकरणानोप्य दक्षिणाग्नौ जुहोति । **अग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरन्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुपदा योनिः स्वाहा ।** इति

**यजमानः-** **अग्नये, अदब्धायवे, अशीततनव इदं न मम**

**अध्वर्युः-** अपरेण पत्नीमुत्तरतोगत्वा वेदं जयमानाय प्रददाति ।

यजमानः- यजमानो वेदं गृहीत्वा **वेदोऽसि वित्तिरसि पाप्मनो व्यावृत्तिं विदेय कर्मासि करुणमसि क्रियासꣳसनिरसि सनिताऽसि सनेयं घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनम्** । इति वेदमभिमृशेत्

अध्वर्युः- यजमानाद्वेदं गृहीत्वा होत्रे प्रयच्छति ।।

होता- वेदं पत्न्यै प्रदाय **वेदोऽसि वित्तिरसि विदेय कर्मासि करणमसि क्रियासंसनिरसि सनिताऽसि सनेयं घृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं। यं वहव उपजीवन्ति यो जनानामसद्वशी । तं विदेय प्रजां विदेय कामाय त्वा।** इनि पत्नीं वाचयेत् । यदि पत्नी प्रजा मे स्यादिति कामयेत तदा वेदस्य जानुसदृशेन प्रदेशेन पत्नी स्वनाभिमालभेत । कामनाभावेऽपि वाचनं भवत्येव ।

होता- **प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वाऽवध्नात्सविता सुशेवः । ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां त्वा सह पत्या दधामि** । इति पत्न्या योक्त्रं विमुच्य तद्योक्त्रं द्विगुणं कृत्त्वा प्रत्यग्गार्हपत्यात्प्राक्पाशं निधाय योक्त्रस्योपरिष्टाद्वेदतृणान्युदगग्राणि निधाय वेदतृणेभ्यः पुरस्तात्तृणैः संश्लिष्टं पूर्णपात्रं निधायाभिमृशन् पूर्णपात्रमभिमृशन्तीम्- **पूर्णमसि पूर्णं मे भूयाः सुपूर्णमसि सुपूर्णं मे भूयाः सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूया अक्षितिरसि मा मे क्षेष्ठाः** । इति वाचयित्वा **प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशिमासाः पितरो मार्जयन्ताम्। प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम्! उदीच्यां दिश्याप ओषधयो वनस्पतयोमार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिर्मार्जयतां मार्जयन्तामिति वा** । इति पूर्णपात्रादुदकमुदुक्षन्नुदुक्षन्तीं **पत्नीं वाचयित्वा** योक्त्रस्याधस्तात्पत्न्यञ्जलिमुत्तानमात्मनश्च सव्यं पाणिमुत्तानं निधाय पूर्णपात्रं निनयन् **माऽहं प्रजां परासिचं या नः सयावरीः स्थ न । समुद्रे वो निनयानि स्वं पाथो अपीथ** । इति पत्नीं वाचयेत् ।

अध्वर्युः- पत्न्याः योक्त्रविस्रस्य मोचयन्त्या अञ्जलौ योक्त्रं निधाय पूर्णपात्रमानयेत् । **इमं विष्यामि वरुणस्य पाशं यमवध्नात्सविता सुकेतः । धातुश्चयौनौ सुकृतस्य लोके स्योन मेसहपत्या करोमि ।**

पत्नी- **समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याऽहं गच्छे समात्मा तनुवा मम** । इत्यानीयमाने पूर्णपात्रे जपित्वा तदुदकं भूमौ निनीयाऽऽर्द्रेण हस्तेन मुखं विमृज्य **यदप्सुते सरस्वति गोष्वश्वेषु यन्मधु । तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वती ।।** पूर्ववत्तिरपवित्र अप आचामति **पयस्वती० पयः अपा० ऽसृज । गार्हपत्यं** तूष्णीं परिषिच्य समिध आधापयाति । **अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेराधिस्वाहा अग्नयेव्रतपतय इदं नमम ।।**

**वायोव्रतपतेत इद०** वायवेव्रतपत इदं० ।
आदित्यव्रतपते० स्वाहा अदित्य व्रतपत इदं० ।
व्रतानांव्रतपते० स्वाहा । व्रताना व्रतानां व्रतपत इदं । पुनः परिषिच्य गार्हपत्यं वेद्युत्करमध्येन निष्क्रामति ।

अध्वर्युः- यथेतमाहवनीयं गच्छेत् ।

होता- वेदतृणानि दक्षिणेन हस्तेनाग्रप्रदेशे गृहीत्वाऽविधुन्वन्-**तन्तुतन्त्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् । अनुल्वणं वयत जोगुवामपो मनुर्भव जनया दैव्यं जनम्** । इति गार्हपत्यादारभ्य सव्येन हस्तेन संततं स्तृणन्नाहवनीयं गत्वा शेषं निधाय प्रत्यगुदगाहवनीयादवस्थायाऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यमादाय आग्नीध्रेणान्वारब्धः प्रायश्चित्तानि जुहोति **अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयासा वयसा कृतोऽयासन्हव्यमूहिषे या नो धेहि भेषजं स्वाहा ।**

यजमानः- **अयसेऽग्नय इदं न मम**, इति त्यागं कुर्यात् ।

होता- पूर्ववत्स्रुवेणाज्यं गृहीत्वा- **अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा ।**

यजमानः- **देवेभ्य इदं न मम**, इति त्यागं कुर्यात् ।

होता- स्रुवेण आज्यं गृहीत्वा-**इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूहळमस्य पांसुरे स्वाहा ।**

यजमानः- **विष्णव इदं न मम,**

होता- स्रुवेण आज्यं गृहीत्वा **भूः स्वाहा ।**

यजमानः- **अग्नय इदं न मम,** इति त्यागं कुर्यात् ।

होता- स्रुवेण आज्यं गृहीत्वा **भुवः स्वाहा ।**

यजमानः- **वायव इदं न मम,** इति त्यागं कुर्यात् ।

होता- स्रुवेणाज्यमादाय **स्वः स्वाहा ।**

यजमानः - **सूर्यायेदं न मम,** इति त्यागं कुर्यात् ।

होता- स्रुवेणाऽऽज्यं गृहीत्वा **भूर्भुवः स्वः स्वाहा ।**

यजमानः- **प्रजापतय इदं न मम,** इति त्यागं कुर्यात् ।

होता- पूर्ववत्स्थित एव, ॐ **च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः ।** इत्युपस्थाय तीर्थेनैव निष्क्रामेत् ।

अध्वर्युः - आज्येन ध्रुवामाप्याययति । यजमानश्च **आप्यातांघृतेन ध्रुवां यज्ञं यज्ञं प्रति देवयद् भ्यः । सूर्याया ऊधोदित्या उपस्थ उरुधारापृथिवी यज्ञे अस्मिन् ।।**

यजमानः- ध्रुवामग्रेण स्थितं स्वभागं प्राश्नाति - **प्रजापतेर्विभान्नाम लोकस्त स्मिं२ स्त्वाददामि सह यजमानेन इति ।**

अध्वर्युः- उपविष्टे यजमाने स्रुवेण आज्यस्थाल्या आऽऽज्य गृहीत्वाऽऽसीनो वक्ष्यमाणामन्त्रैः मर्वप्रायश्चित्तान्याहवनीये जुहुयात् **आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् स्वाहाकृताऽऽहुतिरेतु देवान्त्स्वाहा** ||1||

यजमानः- **देवेभ्य इदं न मम ।**

अध्वर्युः- **इष्टेभ्यः स्वाहा** ||2||

यजमानः- **इष्टेभ्य इदं नमम ।**

अध्वर्युः- **वषडनिष्टेभ्यः स्वाहा** ||3||

यजमानः- अनिष्टेभ्य इदं नमम ।

अध्वर्युः- भेषजं दुरिष्ट्यै स्वाहा ||4||

यजमानः- दुरिष्ट्या इद नमम

अध्वर्युः- निष्कृत्यै स्वाहा ||5||

यजमानः- निष्कृत्या इदं नमम

अध्वर्युः- दौराध्यै स्वाहा ||6||

यजमानः- दौराध्या इदं न मम

अध्वर्युः- दैवीभ्यस्तनूभ्यः स्वाहा ||7||

यजमानः- दैवीभ्यस्तनूभ्य इदं नमम ।

अध्वर्युः- ऋध्यै स्वाहा ||8||

यजमानः- ऋध्या इदं नमम ।

अध्वर्युः- समृद्ध्यै स्वाहा ||9||

यजमानः- समृद्ध्या इदं नमम, इति त्यागं कुर्यात् ।

अध्वर्युः- सर्वसमृध्यै स्वाहा ||10||

यजमानः- सर्वसमृध्या इदं नमम

अध्वर्युः- भूः स्वाहा ||11||

यजमानः- अग्नय इदं नमम ।

अध्वर्युः- भुवः स्वाहा ||12||

यजमानः- वायव इदं नमम ।

अध्वर्युः- सुवः स्वाहा ||13||

यजमानः- सूर्यायेदं नमम ।

अध्वर्युः- भूर्भुवः सुवः स्वाहा ||14||

यजमानः- प्रजापतय इदं नमम ।

अध्वर्युः- इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युगचके स्वाहा ||15||

यजमानः- वरुणायेदं नमम ।

अध्वर्युः- तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह वोध्युरुं शꣳस मा न आयुः प्रमोषीः स्वाहा ||16||

यजमानः- वरुणायेदं नमम ।

अध्वर्यु- त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासि सीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुग्ध्यस्मत्स्वाहा ||17||

यजमानः- अग्नीवरुणाभ्यामिदं नमम ।

अध्वर्युः- स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि स्वाहा ||18||

यजमानः- अग्नीवरुणाभ्यामिदं नमम ।

अध्वर्युः- अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्त्वमया असि । अयसा मनसा धृतोऽ-यसा हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहा ||19||

यजमानः- अग्नये अयास इदं नमम ।

अध्वर्युः- यदस्मिन्कर्मण्यन्तरागाममन्त्रतः कर्म तो वा । अनया हुत्या तच्छमयामि सर्वं तृष्यंतु देवा अवसतां घृतेन स्वाहा ||20||

यजमानः- देवेभ्य इदं न मम ।

अध्वर्युः- यदस्य कर्मणोत्यरीरिचं यद्वान्यूनमिहाकरम् । अग्निष्टं त्स्विष्टकृ द्विद्वान्त्सर्वं स्विष्टं सुहुतं करोतुमे । अग्नये स्विष्टकृते सुहुत आहूतीनां कामानाꣳसमर्धयित्रे स्वाहा । ||21||

यजमानः- अग्नये स्विष्टकृत इदं नमम ।

अध्वर्युः- प्रजापते नत्वदेतान्यन्यो विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाः स्वाहा । ||22||

यजमानः- प्रजापतय इदं नमम ।

अथध्रौवाज्यात्- ब्रह्मप्रतिष्ठा मनसो ब्रह्मवाचो ब्रह्म यज्ञानाः हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्चहीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् स्वाहाकृताहुतिरेतु देवान्स्वाहा ||23||

यजमानः- देवेभ्य इदं नमम ।।

अथध्रौवाज्यात्- आश्रा वितमत्याश्रावितं० रेतु देवान् स्वाहा ||24||

यजमानः- देवेभ्य इदं नमम ।।

अध्वर्युः- यद्वो देवा अतिपादयानि वाचा चित्प्रयत देवहेडनम् । अरायो अस्माः अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेतन स्वाहा ||25||

यजमानः- देवेभ्य इदं नमम ।

अध्वर्युः- ततं म आपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते । अयः समुद्र उत विश्वभेषजः स्वाहाकृतस्य समु तृपणुतर्भुवः स्वाहा ||26||

यजमानः- ऋभुभ्य इदं नमम ।

अध्वर्युः- उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमः स्वाहा ||27||

यजमानः- सूर्यायेदं नमम ।

अध्वर्युः- उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यः स्वाहा ||28||

यजमानः- सूर्यायेदं नमम ।

अध्वर्युः- चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणास्याग्नेः । आऽप्रा द्यावापृथिवी

अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ||29||

यजमानः- सूर्यायेदं नमम ।

अध्वर्युः- इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युगचके स्वाहा ||30||

यजमानः- वरुणायेदं नमम ।

अध्वर्युः- तत्त्वा यामि व्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेह बोध्युरु शꣳस मा न आयुः प्रमोषीः स्वाहा ||31||

यजमानः- वरुणायेदं नमम ।

अध्वर्यु- त्वं नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासि सीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेपाꣳसि प्रमुग्ध्यस्मत्स्वाहा ||32||

यजमानः- अग्नीवरुणाभ्यामिदं नमम ।

अध्वर्युः- स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ । अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि स्वाहा ||33||

अध्वर्युः- त्वमग्ने अयाऽस्ययासन्मनसा हितः । अयासन्हव्यमूहिषेऽया नो धेहि भेषजꣳ स्वाहा ||34||

यजमानः- अग्नये, अयास इदं न मम । (अग्नय इदमिति वा)

अध्वर्यः- प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता वभूव । यत्कामास्ते जुहु-मस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाꣳ स्वाहा ||35||

यजमानः- प्रजापतय इदं नमम ।

अध्वर्यः- इमं जीवेभ्यः परिधिं दधामि मैषानुगादपरे अर्थमेतम् । शतं जीवशरदः पुरु चीस्तिरो मृत्युं दधतां घर्वते न स्वाहा ||36||

यजमानः- मृत्यव इदं नमम ।

अध्वर्युः- इष्टेभ्यः स्वाहा ||37||

यजमानः- इदं नमम ।

अध्वर्युः- वषडनिष्टेभ्यः स्वाहा ||38||

यजमानः- अनिष्टेभ्य इदं नमम ।

अध्वर्युः- भेषजं दुरिष्ट्यै स्वाहा ||39||

यजमानः- दुरिष्ट्या इद नमम

अध्वर्युः- निष्कृत्यै स्वाहा ||40||

यजमानः- निष्कृत्या इदं नमम

अध्वर्युः- दौराध्यै स्वाहा ||41||

यजमानः- दौराध्या इदं न मम

अध्वर्युः- दैवीभ्यस्तनूभ्यः स्वाहा ||42||

यजमानः- दैवीभ्यस्तनूभ्य इदं नमम ।

अध्वर्युः- ऋध्यै स्वाहा ||43||

यजमानः- ऋध्या इदं नमम ।

अध्वर्युः- समृद्ध्यै स्वाहा ||44||

यजमानः- समृद्ध्या इदं नमम, इति त्यागं कुर्यात् ।

अध्वर्युः- यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊति विद्विषो विमृघो जाहि स्वाहा ||45||

यजमानः- अभयंकारा येन्द्राये नमम ।

अध्वर्युः- स्वस्तिदा विशस्पतिर्वत्रहा विमृधो वशी । वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः स्वाहा ||46||

यजमानः- स्वस्तिदेअ भयंकरायैदं नमम ।

अध्वर्युः- आभिर्गीर्भिर्यदतो न ऊनपाप्यायय हरिवो वर्धमानः । यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम स्वाहा ||47||

यजमानः- इन्द्राय हरिवत इदं नमम, इति ।

अध्वर्युः- अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्पय त्वꣳ हि वेत्थ यथातथ ꣳ स्वाहा ||48||

यजमानः- अग्नय इदं नमम ।

अध्वर्युः- पुरुष संमितो यज्ञो यज्ञः पुरुष संमितः यत्वꣳ हि वेत्थयथा अग्नेतदस्य क्ल्पय तथꣳ स्वाहा ||49||

यजमानः- अग्नय इदं नमम ।।

अध्वर्युः- यत्पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः । अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाꣳ ऋतुशो यजाति स्वाहा ||50||

यजमानः- अग्नय इदं नमम ।

अध्वर्युः- पुनास्वादित्यारुद्रावसवः समिन्धतापुनर्ब्रह्माणो वसुनीत यज्ञैः । घृतेनत्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ||51||

यजमान- आदित्यारुद्रवसु ब्रह्मभ्य इदं नमम ।।

अध्वर्युः- अनेन समिधं हुत्वा पुनराज्येनापि स्रुवेण जुहुयात् ||52||

आज्यस्याल्वया सकृगुहीतेन जुहोति । यन्म आत्मनो मिन्दाभूदग्निस्तर्यपुन राहार्जातवेदा विचर्षाणिः स्वाहा ||53||

यजमान- आग्नये जातवेद स इदं नमम ।।

अध्वर्यु- पुन स्रुवेण - पुनरग्निश्चक्षुरदात्पुनरिनद्रो बृहस्पतिः पुनर्मे आशिनायुवं चक्षुराधत्तमक्ष्यो स्वाहा ||54||

यजमानः- अग्रीन्द्रवृहस्पत्यश्विभ्य इदं ।।

अध्वर्युः- भूस्वाहा ||55||

यजमान- अग्नाय इदं ।

अध्वर्युः- भुवःस्वाहा । ||56||

यजमान- वायव इदं नमम ।।

अध्वर्युः- सुवःस्वाहा ||57||

यजमान- सूर्ययिद इदं नमम ।।

अध्वर्युः- ओं स्वाहा ||58||

यजमान- परमात्मन इदं नमम ।।

अध्वर्युः- यच्चिध्दिते विशोयथा प्रदेववरुणं व्रतम् । मिनिमासि द्यवि द्यविस्वाहा ||59||

यजमानः- वरुणायेदं नमम ।।

अध्वर्युः- यत्किचेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्या श्चरामसि ।
अचित्तीय त्तवधर्मायुयुपिम मानस्तस्मा देनसो देवरीरिषः स्वाहा ||60||

यजमानः- वरुणायेदं नमम ।।

अध्वयुः- कितवासोयद्रि रिपुर्न दीर्भि यद्वाघासत्यमुतयन्नाविह्म ।
सर्वाताविष्य शिथिरेवदेवाऽधाते स्याम वरुणथियासः स्वाहा ||61||

यजमानः- वरुणायेदं नमम ।।

अध्वर्युः- तन्तुन्तंन्वन्नजसो मानुमन्विहि ज्योतिष्मतः पथोरक्षधियाकृता३ ।
अनुल्वणं वयत जोगुवामपो मनुर्भवजनया दैव्यं जनः स्वाहा ||62||

यजमानः- अग्नेयेतन्तुमत इदं नमम ।।

अध्वर्युः- उद्बुध्यस्वाग्नेप्रति जागृह्येन मिष्टपूर्त सः सृजेथामयं च ।
पुनः कृण्वः स्त्वापितरं युवानंमन्वताः सीत्वयितंतुमतः स्वाहा ||63||

यजमानः- अग्नये तन्तुमत इदं न मम ।।

अध्वर्युः- त्रियस्त्रिः शत्तन्तवो ये वितात्तिरे य इमं यज्ञः स्वधाया ददन्ते ।
तेषां च्छिनं प्रत्येतदधामिस्वाहाघर्मोदेवाःअप्येतु स्वाहा ||64||

यजमानः- अग्नये तन्तुमत इदं न मम ।।

अध्वर्युः- अन्वग्निरुपषसामग्रमख्यदन्वहानिप्रथमो जातवेदाः । अनुसूर्यस्य रुपुरुत्रा चरश्मी ननुधावापृथिवी आ ततानः स्वाहा ||65||

यजमानः- द्यावृथिवीभ्यामिदं नमम ।।

अध्वर्युः- मनोज्योति र्जुषतामाज्यं विच्छिन्नंयज्ञं२ समिमं ददातु । या इष्टाउषसो निम्रुचश्चताः सन्दधामिहविषा घृतेनस्वाहा ||66||

यजमानः- अग्नये मनस्वत इदं नमम ।।

अध्वर्युः- भूरग्रये च पृथिव्यैच महते च स्वाहा ||67||

यजमानः- अग्नये पृथिव्यै महत इदं० ।।

अध्वर्युः- भुवोवाय वे चान्तरिक्षायचमहते च स्वाहा ||68||

यजमानः- वायवेन्तरिक्षाय महत इदं०

अध्वर्युः- सुवरादित्या च दिवेचमहतेच स्वाहा ||69||

यजमानः- आदित्ययदिवे महत इदं०

अध्वर्युः- भूर्भुवःसुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा ||70||

यजमानः- चन्द्र मसे च नक्षत्रेभ्यो दिग्भयो महतेभ्य इदं न मम ।।

अध्वर्युः- सप्तते अग्ने समिधः सप्तजिह्वासप्तर्षयः सप्त धाम प्रियाणी । सप्त होत्रा सप्त धात्वा यजन्ति सप्त योनि रापृणस्वाघृतेन स्वाहा ||71||

यजमानः- अग्रये सप्तवत इदं० ।।

अध्वर्युः- प्रजापतेनत्व० रयीणांस्वाहा० ||72||

यजमानः- प्रजा० इदं० ।

अध्वर्युः- प्रजापतये स्वाहा ||73||

यजमानः- **प्रजापतय० ..**

अध्वर्युः- **हिरण्यगर्भाय स्वाहा** ||74||

यजमानः- **हिरण्यगर्भयिइद० ॥**

अध्वर्युः- **भृगूणां पतये स्वाहा** ||75||

यजमानः- **भृगूणांपतयिदं० ॥**

अध्वर्युः- **अंगिरसं पतये स्वाहा** ||76||

यजमानः- **आंगीरसं पतय इदं० ॥**

**अ-भूरग्नये०** ||77|| **भुवो वायवे च** ||78|| **सुवरादित्याय च** ||79||

**भूर्भुवसुवश्चनद्रमसे०** ||80|| **भूस्वाहा** ||81|| **भुवस्वाहा** ||82|| **सुवस्वाहा** ||83|| भूर्भुवसुवस्वाहा ||84|| **जुह्वां द्वादशागृहीतं गृहीत्वा पंचविग्राहं जुहोति - जातवेदसे० त्यग्निः स्वाहा** ||85||

यजमानः- **अग्नये जतवे दस इदं । अ० मानो ज्योतिः०। घृतेन स्वाहा** ||86|| **य०- अग्नये मनस्वतइदं० अ० भूरग्नयेचं०** ||87|| **भुवो वाय वेच०** ||88|| **सुवर-दित्याय** ||89||

यजमानः- ऋक्तो यज्ञभ्रेषप्रायाश्चित्तं करिष्ये । इति संकल्पयेत् ।

ब्रह्मा- गार्हपत्यस्य पश्चादुपविश्य, उपस्थस्योत्तानत्वाविरोधेन दक्षिणं जान्वाच्य स्रुवेणाऽऽज्य-माज्यस्थाल्या गृहीत्वा **भूः स्वाहा**, इति गार्हपत्ये जुहुयात् ।

यजमानः- **अग्नय इदं न मम**, इति त्यागं कृत्वा यजुष्टो यज्ञभ्रेषप्रायश्चित्तं करिष्ये, इति संकल्पयेत् ।

ब्रह्मा- दक्षिणाग्नेः पश्चादुपविश्य, उपस्थस्योत्तानत्वाविरोधेन दक्षिणं जन्वाच्याऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यं गृहीत्वा **भुवः स्वाहा**, इति दक्षिणाग्नौ जुहुयात् ।

यजमानः- **वायव इदं न मम**, इति त्यागं कृत्वा सर्वतो यज्ञभ्रेषप्रायश्चित्तं करिष्ये, इति संकल्प-येत् ।

ब्रह्मा- आहवनीयस्य पश्चादुपविश्योपस्थस्योत्तानत्वाविरोधेन दक्षिणं जान्वाच्याऽऽज्यस्थाल्याः स्रुवेणाऽऽज्यं गृहीत्वा **भुर्भुवः स्वःस्वाहा**, इत्याहवनीये जुहुयात् ।

यजमानः- **प्रजापतय इदं न मम ।**

अध्वर्युः- अन्तवेदि बर्हिभ्यः प्रत्येकं किंचिद्गृहीत्वा सकृत् समनक्ति ध्रवायाम् । **समंक्तां बर्हिः हविषाघृतेन समादित्यैः वसुभिः संमरुद्भिः । समिन्द्रेण विश्वेभिर्देवैः रंवताम्।** आहविये प्रहरति **दिव्यं नभोगच्छातुयत्स्वाहा ।**

यजमानः- दिव्याय नभस इदं न मम ।।

अध्वर्युः- उत्थाय दक्षिणपादं अन्तर्वेद्यां निधाय ध्रुवामादाय सर्वं जुहोत्यन्तर्वेद्यूर्ध्वस्तिष्ठन् **देवा गातुविदो गातुं वित्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा । वाते धाः स्वाहा**, इति ध्रुवया समिष्टयजुर्जुहुयात् ।

यजमानः- **देवेभ्यो गातुविद्वयोयज्ञाययरमात्मान इदं न मम ।**

ब्रह्मा- समिष्टयजुर्हूयमानेहोमाद्धुतेसमिष्टयजुष्युपोत्थाय आहवनीयमुपतिष्टते - **अयाड्यज्ञꣳ हविषो जातवेद अदब्धो अन्तत पूर्वो अस्मिन्निषद्य । सन्वन्सनिꣳ सुविमुचा नो विमुंचधेह्यस्मासुद्रविणं जातवेदो यच्चभद्रं** - इति ।।

अध्वर्युः- प्रवसति यजमाने यजमानभागं **प्रजापतेर्विभान्नाम लोक स्तस्मिꣳस्त्वा दधामि सह यजमानेन ।** इति ध्रुवायामवधाय देवा गातुविद इत्यादि पूर्ववज्जुहुयात् ।

अध्वर्युः- प्रणीतापात्रमन्तवैद्यां निधाय यजमानं वाचयति ।

यजमानः- **सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः ।** प्रतिदिशामध्वयुर्यजमान जलमभिषिंचतः **प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणायां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि ग्रहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप आषधयो वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायांदिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम्।** इति **समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिगच्छत । अच्छिद्रः प्रजया**

भूयासं मा परासेचि मत्पयः । इत्यान्तर्वेदि प्रणीताशेषं निनीय उप्पाय दक्षिणेनपदा विष्णुक्रमान् क्रमते ।

आश्वलायन ब्रह्मा- तूष्णीं स्वभागं प्राश्याऽऽचम्य प्रत्यगुदगाहवनीयादवस्थाय, आज्यस्थाल्याः स्रुवेणाऽऽज्यमादायाऽऽग्नीध्रेणान्वारब्धः सन्, (होत्रानन्वारब्धश्चेत्) अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्वमया असि । अयासा वयसा कृतोऽयासन्हव्यमूहिषेऽया नो धेहि भेषजं स्वाहा । इत्याहवनीये जुहुयात् ।

यजमानः- अयसेऽग्नय इदं न मम ।

ब्रह्मा- पूर्ववत्स्थित्वाऽऽज्यं स्रुवेण गृहीत्वा, अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः स्वाहा । जुहुयात् ।

यजमानः- देवेभ्य इदं न मम ।

ब्रह्मा- इदं विष्णुं र्विचक्रमे त्रेधा निदधेपदम् समूह्ळ मस्य पांसुरे खाहा ।

यजमानः- विष्णव इदं न मम ।

ब्रह्मा- भूः स्वाहा ।

यजमानः- अग्नय इदं न मम ।

ब्रह्मा- पूर्ववत् आऽऽज्यं स्रुवेण गृहीत्वा भुवः स्वाहा ।

यजमानः- वायव इदं न मम ।

ब्रह्मा- स्वः स्वाहा ।

यजमानः- सूर्यायेदं न मम ।

ब्रह्मा- भूर्भुवः स्वः स्वाहा ।

यजमानः- प्रजापतय इदं न मम ।

ब्रह्माऽऽग्नीध्रश्च- ॐ च मे स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै त उप यत्तेऽतिरिक्तं तस्मै ते नमः । इत्युपस्थाय यथेतं निष्कामेयाताम् ।

यजमानः- विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवी मनु विक्रमे निर्भक्तः

**स यं द्विष्मः ||1|| विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु विक्रमे निर्भक्तः स यं द्विष्मः ||2|| विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनुविक्रमे निर्भक्तः स यं द्विष्मः ||3||** दक्षिणेन पदा, उत्तरोत्तरं क्रममधिकान्तरालं प्राक्स्त्रीन्विष्णुक्रमान् (पादविक्षेपान्) प्रकम्य तत्रैव स्थित्वा **विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभेन छन्दसा दिशोऽनु विक्रमे निर्भक्तः स यं द्विष्मः ||4||** इति जपित्वा तत्रैव स्थित्वा, आहवीय मुपतिष्ठते **अगन्म सुवः सुवरगन्म संदृशस्ते मा च्छित्सि यत्ते तपस्तस्मै ते माऽऽवृक्षि ।** तत्रैवासीनो बहिर्गत्वा वा आदित्यमुपतिष्ठते **सुभूरसि श्रेष्ठोरश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेहि** दर्भैरात्मानं मार्जयन् पाप्मानमेभ्यो लेके भ्यो निर्भजति **इदमह ममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तारिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भ-जामि । निर्भक्तः स यं द्विष्मः ।** इति अपउपस्पृष्य **सं ज्योतिषाभुवम्** इत्युत्तरः प्रत्येत्यात्मानमभिमृशति । समहं प्रजया मं मया प्रजा समहꣳरायस्पोषेण स मया रायस्पोष इति । **अथाह व नीये समिध आदधति समिध्दो आग्ने मे दीदिहि समेध्दाते अग्ने दीद्यासꣳस्वाहा ।** अथदक्षिणमभिपर्यावर्त्य-**ऐन्दी मावृतमन्वा वर्ते** इति। अथोद ङपर्यावर्तते आह वनीयमुप तिष्टते - **वसुमान्यज्ञो वसीयान्भूयासम् ।** अथाग्नि पावमानीभ्यां गार्हपत्यमुपतिष्ठते - **अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छनाम् । अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत्पोषꣳ रयिं मयि । अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमाः।** इति गार्हापत्यमुपस्थााय तत्रैव स्थित्वा **तामाशिषमाशासे** रामचन्द्रशर्मणे अत्रस्वनामगृणीयात् **ज्योतिष्मतीम् । अमुष्मा** इति यावन्तो अस्य पुत्रा जाता भवन्ति तावन्तः स्वपुत्र नामगृह्णाति - **ज्योतिष्मतीं इत्यान्तः** दक्षिणाऽतिक्रम्य **कस्त्वा युनक्ति स त्वा विमुञ्चतु** इति यज्ञं विमुच्य, निरः पवित्रमप आचामति पयस्वतीः॰ मꣳ सृज । अयाहवनीये समिध आदधति । **अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि स्वाहा । वायो व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि** स्वाहा । **आदित्य- व्रतमचारिषं तदशकं तन्मेऽराधि ।** स्वाहा **व्रातानां व्रतपते**

**व्रतमचारिषं तदेशकं तन्मेऽराधि** स्वाहा। इति व्रतं विसृज्य उपोत्थाय **यज्ञो बभूव स आ बभूव स प्रजज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन्करोतु । वयꣳस्यामपतयोरयीणाम् ।** इति यज्ञस्य पुनरालम्बं जपित्वा प्राङुत्क्रम्य **गोमाꣳअग्नेऽवि माꣳ अश्वी यज्ञो नृवत्सखा सदमिद प्रमृष्यः । इडावाꣳ एषो असुर प्रजावान्दीर्घो रयिः पृथुबुध्नः समावान्।** इति गोमतीं जपित्वा **यज्ञ शं च म उप च म आयुश्च मे वलं च मे यज्ञ शिवो मे संतिष्ठस्व यज्ञ स्विष्ठो मे संतिष्ठस्व यज्ञारिष्टो मे संतिष्ठस्व।** इति जपित्वा गार्हपत्यस्य, पश्चादुपविश्य **वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम् ।** इत्यप उपस्पृश्य **ब्राह्मणाꣳस्तर्पयितवै ।** इति परिकर्मिणः संप्रेष्येत् । **अनेन दर्शयागेन / पौर्णमास यागेन भगवानग्निरूपः परमेश्वरः प्रीयताम् ।** इत्युक्त्वा विहाराद्बहिरागत्य द्विराचामेत्।

**यजमानः-** देशान्तरे वसन्नौपवसथ्येऽहनि यजनीये चाहनि विहारदेशमभिमुखो याजामानाध्वर्यव-काण्डोक्तान्सर्वानपि याजमानमन्त्रांश्च जपेत् ।

इति दर्शपूर्णमासप्रयोगः ।

# दर्शपूर्णमासप्रयोगसंभारस्मरणम् ।

| संभारनाम | प्रयोजनम् |
|---|---|
| अग्न्यागारम् | विहाराद्यर्थम् । |
| अग्न्यायतनम् | अग्निस्थापनाद्यर्थम् । |
| जायापती | कर्मानुष्ठानार्थम् । |
| ऋत्विजः | याजनार्थम् । |
| उदकम् | आचमनाद्यर्थम् । |
| दर्भासनम् | उपवेशनार्थम् । |
| शरावाः | अग्निप्रणयनाद्यर्थम् । |
| दर्भाः | पवित्राद्यर्थम् । |
| यज्ञियकाष्ठानि | अग्निसिमिन्धनाद्यर्थम् । |
| पलाशशाखा | वत्सापाकरणार्थम् । |
| असिदः | दर्भाद्याहरणार्थम् । |
| दर्भमुष्टयः | प्रस्तराद्यर्थम् । |
| रज्जुद्वयम् | दर्भसमित्बन्धनार्थम् । |
| परिधयो बाहुमात्राः | आहवनीयपरिधानार्थाः । |
| अरत्निमात्राः सामिधेन्यः | आहवनीयसमिन्धनार्थम् । |
| आघारसमिद्द्वयम् | आघारार्थम् । |
| अनूयाजसमित् | अनूयाजार्थम् । |
| परिवासनशकलम् | सांयदोहप्रक्षेपार्थम् । |
| सवत्साः षड् गावः | सांनायय्यसंपादनार्थम् । |
| दोग्धा | गोदोहनार्थम् । |
| गोशकृत् | कुम्भीलेपनाद्यर्थम् । |
| दधि | आतञ्जनार्थम् । |
| स्फ्यः | वेद्युद्धननादिकार्यार्थम् । |
| कपालानि | पुरोडाशाधिश्रयणार्थम् । |
| अग्निहोत्रहवणी | प्रोक्षणाद्यर्थम् । |
| शूर्पम् | निर्वापाद्यर्थम् । |
| कृष्णाजिनम् | व्रीह्यवघाताद्यर्थम् । |
| शम्या | दृषदत्याधानाद्यर्थम् । |
| उलूखलम् | व्रीह्यादिर्हविरावपनार्थम् । |

| संभारनाम | प्रयोजनम् |
| --- | --- |
| मुसलम् | अवहननार्थम् । |
| दृष्दुपले | व्रीह्यादिहविःपेषणार्थम् । |
| स्रुवः | आज्यावदानाद्यर्थम् । |
| जुहूः | होमसाधनम् । |
| उपभृत् | प्रयाजानुयाजाज्यग्रहणार्थम् । |
| ध्रुवा | सर्वयज्ञाद्याज्यग्रहणार्थम् । |
| वेदः | वेदिसंमार्जनाद्यर्थम् । |
| निर्वापपात्री | निर्वापपिष्टसंवपनाद्यर्थम् । |
| आज्यस्थाली | आज्यनिर्वापार्थम् । |
| प्राशित्रहरणम् | प्राशित्रावदानाद्यर्प्पम् |
| इडापात्रम् | इडावदानार्थम् |
| प्रणीताप्रणयनम् | अपां प्रणयनार्थम् |
| योक्त्रम् | पत्न्याः कटिबन्धनार्थम् । |
| मदन्तीपात्रम् | जलतापनार्थम् । |
| मेक्षणम् | पिष्टसंयवनाद्यर्थम् । |
| वेदाग्राणि | पात्रसंमार्गार्थं |
| अन्वाहार्यस्थाली | अन्वाहार्यचरुश्रपणार्थं |
| उपवेषः | अङ्गारनिरूहणार्थम् । |
| पिष्टलेपफलीकरणपात्रम् | पिष्टलेपफलीकरणस्थापनार्थम् । |
| कुम्भीद्वयम् | पयःश्रपणार्थमेका। अन्या च सांयदोह्नार्थम् । |
| दोहनपात्रम् | गोदोहनार्थम् । |
| अभिधानी निदाने च | गोबन्धनार्थमभिधानी । निदाने च गोः पादवन्धनार्थं वत्सवन्धनार्थं च |
| पिधानपात्रम् | दधिकुम्भ्यपिधानार्थम् । |
| यजमानभागपयः पात्रम् | याजमानशृतावदानार्थम् । |
| यजमानभागदधिपात्रम् | याजमानदध्यवदानार्थम् । |
| अग्नीद्भागापात्रम् | तद्भागस्थापनार्थम् । |
| परिश्रयणम् | देवपत्नीयागसमये गार्हपत्य प्रच्छादनार्थं। |
| संदशत्रयम् | अङ्गारग्रहणार्थम् । |
| कस्तम्भी | शकटस्थापनार्थम् । |
| शकटः | व्रीह्यादिस्थापनार्थम् । |

| संभारनाम | प्रयोजनम् |
| --- | --- |
| व्रीहयः | पुरोडाशार्थम् । |
| तण्डुलाः | अन्वाहार्यचर्वर्थम् । |
| आज्यम् | होमार्थम् । |
| इध्मप्रव्रश्चनानि | दक्षिणग्नावभ्याधानार्थम् । |
| पिण्डपितृयज्ञपाणी | पिण्डपितृयज्ञियहविर्निर्वापार्थम् । |
| शिक्यम् | सायंदोहकुम्भीस्थापनार्थम् । |
| अरणीद्वयम् | (उत्तरारणी, अधरारणी) अग्निसंपादनार्थम् । |
| मन्थोपमन्थौ | मन्थनार्थम् । |
| चत्वारा ऋत्विजः । | होता, व्रह्मा, अध्वर्युः अग्नीत् । |

येन चान्येनार्थी भवति तदपि संग्राह्यमिति यावत् ।

---